"अगारैकदेशे प्रघणः प्रघाणश्च"॥ 'द्वारप्रकोष्ठो बाह्य उच्यत इति'। द्वारप्रदेशे द्वौ प्रकोष्ठावलिन्दावाभ्यन्तरो बाह्यश्च तत्र बाह्ये प्रकोष्ठे निपातन नागारैकदेशमात्रे, एतच्च निपातनाल्लभ्यते, प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यतइति अप् कर्मणि पक्षे वृद्धिश्च ॥

"उद्घनोत्याधानम्"॥ 'अत्याधानमिति'। अतिशब्द उपरिभावे वर्त्तते, आदधाति स्थापने, अधिकरणे ल्युट्, उद्घन इत्यत्राप्यधिकरण एवाप् ॥

"अपघनोङ्गम्"॥ 'अपघन इति'। करणेप् ॥

"करणेयोविद्रुषु"॥ 'द्रुघन इति'। द्रुरिति वनस्पतिनाम वनस्पतयो वै द्रव इति निगमो भवति। 'पूर्वपदात्सञ्ज्ञायामग इति वेति'। सञ्ज्ञा चैषा कुठारविशेषस्य ॥

"स्तम्बे क च"॥ 'तत्र चेति'। अनन्तरोक्तेऽपि के तु घनादेशो न भवति पूर्वमेव घनादेशस्याप्सम्बन्धित्वात। 'स्तम्बघ्न इति'। उपपद समास, गमहनेत्युपधालोप, होहन्तेरिति कुत्वम्। 'स्त्रियामित्यादि'। एतच्च कापो प्रतिपदविधानात्सर्वापवादत्वात् कृत्यल्युटो बहुलमिति वचनाद्वा लभ्यते, अन्ये पुनरूतियूतिजूतिसातिहेतीति हन्ते क्तिनि निपातनान्निपातनस्य च सर्वापवादत्वात्स्तम्बहेतिरितीच्छन्ति, अपरे तु करणाधिकरणयोश्चेति ल्युटि स्तम्बहननीति भवितव्यम्, यथा रक्षोयातूना हननी त्युक्तमित्याहु। 'स्तम्बघात इति'। भावे घञ्, षष्ठीसमास ॥

"परौ घ"॥ 'पलिघ इति'। परेश्च घाङ्कयोरिति विभाषा लत्वम् ॥

"उपघ्न आश्रये"॥ 'आश्रयशब्द इत्यादि'। आश्रयणमाश्रय स प्रत्यासत्त्या ऽविनाभावीत्येष लक्षणा हेतु। 'पर्वतोपघ्न इति'। पर्वते नोपहन्यते सामीप्येन गम्यतइति कर्मण्यप् ॥

"सघोद्घौ गणप्रशसयो"॥ सहनन सघो भावेप्, उद्धन्यते उत्कृष्टो ज्ञायतइति कर्मण्यप्, गत्यर्था बुद्ध्यर्था इति हन्तिर्ज्ञाने वर्त्तते। 'उद्घो मनुष्याणा[1]मिति'। मनुष्याणा मध्ये प्रशस्त इत्यर्थ ॥

[1] मुद्रितमूलपुस्तके मनुष्य इति प्रथमान्तपाठोऽपपाठ ।

"निघो निमितम्" ॥ 'समारोहपरिणाहमिति'। आरोह उच्छ्राय, परिणाहो विस्तार, तौ समानौ यस्य तत्तथोक्तम्। 'निघा वृक्षा इति'। निर्विशेष हन्यन्ते ज्ञायन्तइति कर्मण्यप् ॥

"ड्वित क्त्रि" ॥ 'भावे ऽकर्त्तरि च कारके इति वर्त्तत इति'। अधिकारस्याविच्छेद दर्शयति, अय तु क्त्रिप्रत्यय स्वभावाद्भावएव भवति पाकेन निर्वृत्त पक्त्रिममित्युच्यते न तु पक्त्रेनेति। 'केवलो न प्रयुज्यतइति'। तेनावश्यमन्यशब्देनैव विग्रह कर्त्तव्य, तद्दर्शयति। 'पाकेन निर्वृत्त पक्त्रिममिति'। 'उप्त्रिममिति'। यजादित्वात्सम्प्रसारणम्, अथ ड्वितस्त्रिममित्येव कस्मान्नोक्तमेव हि त्क्रिमम् नित्यमिति न वक्तव्य भवति, नैव शक्यम्, भावइत्यधिकाराद्भावेपि कृत्रिममिति प्राप्नोति, अथाप्युभयानुवृत्तावप्यभिधानस्वाभाव्यात्कारकएव कर्मणि भवेद् एवमपि भूतकालो न गम्येत एतदप्यभिधानस्वाभाव्याद्भवतु नाम एवमर्थाभिधाने प्रकारभेदो न स्यात् नहि पक्तृपत्क्रिमशब्दयो पर्यायता मन्यन्ते ॥

"ट्वितो थुच्" ॥ अयमपि स्वभावाद्भाव एव भवति घञादेरपवादो वासरूपविधिना सोपि भवत्येव ॥

"यजयाचयतविच्छप्रच्छरक्षो नङ्" ॥ नङो ङकारो विच्छेर्गुणप्रतिषेधार्थ, अन्यथान्तरङ्गत्वात्तुकि कृतो छ्वोः शूडनुनासिके चेति सतुक्कस्य छस्यादेशे कृते लघूपधत्वाद्गुण स्यात्, नङन्ता सर्वे पुल्लिङ्गा, याचिस्तु स्त्रीलिङ्ग, वासरूपविधिश्च यथाभिधान भवति। 'प्रश्न इति'। अत्र ग्रहिज्यादिसूत्रेण सम्प्रसारण कस्मान्न भवतीत्याह। 'प्रच्छेरिति' ॥

"कर्मण्यधिकरणे च" ॥ कर्माधिकरणयो पृथक् पृथक् सप्तमीनिर्द्देशान्न तावदुभयोरुपपदत्व तत्र व्याख्यानात्कर्मोपपदमधिकरण तु प्रत्ययार्थ इत्याह। 'कर्मण्युपपदइति'। 'अधिकरणग्रहणमर्थान्तरनिरासार्थमिति'। अर्थांतर भाव' करणादि च कारकम् ॥

"स्त्रिया क्तिन्" ॥ 'घञजपामपवाद इति'। येन नाप्राप्तिन्यायेन घञोपवाद, अजपोस्तु परत्वादपवादो बाधक इत्यर्थ, उक्त च अजब्भ्या

स्त्रीखलना स्त्रियां खलनौ विप्रतिषेधेनेति। अजपोरवकाश चय जय लव इति, क्तिनोवकाश कृतिर्हृति, चिति स्तुतिरित्यत्रोभयप्राप्तौ क्तिन् भवति विप्रतिषेधेन, लब्धि, षित्त्वादङपि भवति लभेति। ननु निष्ठायां वा सेटोऽकारवचनात्सिद्धमिति ब्रुवतो वार्तिककारस्य गुरोश्च हल इत्यकारप्राप्तावेवाबादिभ्यश्चेति क्तिन्नभिमत इति गम्यते तत्कथमङ्विषये क्तिन्नुदाहृत, सत्य, प्रयोगबाहुल्यादिदमपि भवतीति मन्यते, एव च युज्विषयेपि क्तिन्प्रयुज्यते आस्तिरिति, अत एवाबादय प्रयोगतोनुसर्तव्या इत्युक्तम्। 'श्रुयजिस्तुभ्य करणइति'। ल्युटि प्राप्ते वचनम्, श्रुति श्रोत्रम्, इज्यतेऽनया देवता इष्टि। 'ऋकारल्वादिभ्य इति'। ऋकारान्तेभ्यो ल्वादिभ्यश्च पर क्तिन्निष्ठाकार्य लभते रदाभ्या निष्ठातो न ल्वादिभ्य इति च निष्ठाया विधीयमान नत्व क्तिनोपि भवतीत्यर्थ। 'क्तिन्नपीष्यतइति'। अस्त्रियामिति प्रतिषेधाद्वासरूपविधेरभावादिदमुक्तम्॥

"स्थागापापचो भावे"॥ 'अङोपवादस्य बाधक इति'। स्थादिभ्य आतश्चोपसर्गइति प्राप्तस्य पचेस्तु षित्त्वात्प्राप्तस्याङोपवाद। का स्थायिका का स्थायिमित्यत्र विभाषाख्यानपरिप्रश्नयोरिति प्राप्तयोर्ण्वुलिञोरपि बाधक कस्मान्न भवति पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरानिति। 'कथमिति'। न कथ चिद्वासरूपविधेरभावात्। 'नाप्यन्तायेति'। नियमेन चतुर्थ्यन्तप्रतिरूपकोय निपातो यथा चिरायेति॥

"मन्त्रे वृषेषपचमनविदभूवीरा उदात्त"॥ 'प्रकृतिप्रत्यययोरिति'। प्रकृतिसामान्यविवक्षाया द्विवचनमन्यथा बहुत्वात्प्रकृतीना बहुवचनप्रसङ्गात्। 'विभक्तिविपरिणामेनेति'। वृषादीना द्वन्द्वे या प्रथमा तस्या पञ्चमीभावेन यो विपरिणामस्तेन प्रकृतिप्रत्यययो सबन्ध अन्यथा सबन्धानुपपत्तिरित्यर्थ। वृषु सेचने इषु इच्छाया, वृषिसाहचर्यादुदितो ग्रहण सूत्रे त्वकारो न विवक्षित, मन ज्ञाने मनु अवबोधने द्वयोरपि ग्रहण विदादीनामपि यथादर्शनम्। 'सर्वत्रेति'। मन्त्रे चामन्त्रे

चेत्यर्थ । वृषादिभ्य क्तिप्रत्यये विधातव्यउदात्तवचनमुत्तरार्थं, व्रजयजो भावे क्यबुदात्तो यथा स्यात् प्रमतिरित्यादौ च तादौ च निति कृत्य ताविति पूर्वपदप्रकृतिस्वरार्थं च, पिबतेरपि मन्त्रे क्तिन्नुदात्तो दृश्यते त्व सुतस्य पीतये, मध्व सोमस्य पीतयइति ॥

"ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च" ॥ 'मन्त्रइति नानुवर्त्तत इति'। तेन ब्राह्मणे भाषाया चाय विधिर्भवति'। 'स्यतेरिति'। षोन्त कर्मणीन्यस्य । 'इत्वाभाव इति'। द्यतिस्यतीत्यादिना प्राप्तस्येत्वस्याभाव । 'सनोतेर्वेति'। षणु दानइत्यस्य । 'हन्तेर्हिनोतेर्वेति'। यदा हन्तेस्तदा नकारस्येत्व निपात्यते, यदा हिनोतेस्तदा तु गुण । 'कीर्त्तयतेरिति'। कृत सशब्दन इत्यस्य चुरादिणिजन्तस्य ण्यासश्रन्थो युजिति युचोपवाद क्तिन्नि पात्यतउदात्तत्व च, इडभावस्तु तितुत्रेत्यादिना सिद्ध , उपधायाश्चेतीत्वम्, हलि चोपधाया चेति दीर्घत्वम् । कालापास्तु युचमपीच्छन्ति कीर्त्तनेति ॥

"व्रजयजोर्भावे क्यप" ॥ 'इज्येति'। वच्यादिसूत्रेण सम्प्रसारणम्। यद्युदात्त इति वर्त्तते पित्करण किमर्थमित्यत आह । पित्करणमुत्तरत्र तुगर्थमिति' ॥

"सञ्ज्ञाया समजनिषदनिपतमनविदषुञ्शीङ्भृञिण" ॥ 'भाव इति न स्वर्यतइति ।' पूर्वसूत्रे यद्भावग्रहण तस्येहास्वरितत्वान्नानुवृत्तिरित्यर्थ । 'समज्येति'। घञपो प्रतिषेधे क्यप उपसख्यानमिति वचनाद्वीभावाभाव , अन्ये तु सञ्ज्ञायामित्येव क्यपो विधानात् रूढ्यनुगमार्थत्वाच्च सञ्ज्ञाग्रहणस्य वीभावाभावमाहु , नहि वीभावे सति सञ्ज्ञा गम्यते । समज्या सभा, निषद्या आपण , निपत्या पिच्छिला भूमि , मन्या गलपार्श्वशिरा मन्यन्ते नयेति कृत्वा तया हि क्रुद्धो ज्ञायते, क्यपोऽझलादित्वादनुदात्तोपदेशेत्यनुनासिकलोपो न भवति तदभावात्तुगपि न भवति, अन्ये तु सञ्ज्ञायामिति वचनाद्यथा समज्येत्यत्र वीभावो न भवति एव मनेरनुनासिकलोपस्तत्र कृते तुगपीत्याहु । नात्राप्तवचनमस्ति । विद्यते ज्ञायतेनयार्थ इति विद्या, सूयतेभिषूयते सोमोस्यामिति सुत्याभिषवदिवस , सुत्यमह

स्तमिति त्वार्थे नपुसकत्वम, शय्यतेस्यामिति शय्या खट्वादि, भरण भृत्या जीविका, ईयते गम्यतेनयेतीत्या दीपिका, भृञोसञ्ज्ञायामित्यत्रोक्त स्त्रिया भावाधिकारोस्ति तेन भार्य्या प्रसिद्ध्यतीति, इह तु भावइति न स्वर्यतइत्युक्त, तत्र पूर्वापरविरोध मन्यमान पृच्छति।'कथ तदुक्तमिति'। परिहरति।'भावाधिकार इति'। सञ्ज्ञायामित्युच्यते भृञश्च भावएवोत्प द्यमानेन क्यपा सञ्ज्ञा गम्यते ऽत सञ्ज्ञावशाद्योय भावस्य भृत्याशब्दवाच्य त्वेन व्यापार स एव तत्र भावाधिकारो विवक्षितो न तु शास्त्रीय स्वरितत्वनिबन्धन इत्यर्थ, सञ्ज्ञायामिति वर्त्तमाने पुन सञ्ज्ञाग्रहण भा वार्थ, पूर्वक हि सञ्ज्ञाग्रहण कारकेण सबद्धम् असञ्ज्ञाया तु क्तिन्नेव भवति ॥

"कृञ श च"॥ 'योगविभाग इति'। कृञ क्यब् भवति तत श च चकाराद्यथाप्राप्त चेति तेन त्रीणि रूपाणि भवन्ति, अन्यथा चका रेणानन्तरस्य क्यप एव समुच्चयो न तु क्तिन इति क्तिन्न स्यात्, शकार सार्वधातुकसञ्ज्ञार्थस्तत्र यदा भावकर्मणो शस्तदा, सार्वधातुके यक् रिङ् शयग्लिङ्क्षिति रिङादेशोन्यत्र शकार एव परतो रिङादेशोचिश्नुधा त्वित्यादिनेयङ् ॥

"इच्छा"॥'इषेर्द्धातोरिति'। इषु इच्छायामित्यस्माद्भावे शप्रत्ययो भवतीति न त्वकर्त्तरि कारके स्वभावात्।'परिचर्येत्यादि'। परिचयादी नामपि निपातनस्योपसख्यान परिचर्यादयोपि शप्रत्ययान्ता निपातयितव्या इत्यर्थ, तत्र सर्वत्र शप्रत्ययो यक्च निपात्यते, परिचर्या पूजा, परिसया परिसरणमत्र गुणोपि निपात्यते, मृग अन्वेषणे चुरादावदन्तोत्रातो लोपा भावो निपातनात्, शे यकि णिलोप, मृगया, अटते शे यकि यका सह टकारस्य द्विर्वचन पूर्वभागे यकारस्य निवृत्तिर्दीर्घत्वमित्येतत्सर्वं निपा त्यते, हलादिशेषस्तु नास्ति षाष्ठिके द्विर्वचनेभ्याससञ्ज्ञाविधानाद् यदा त्वश्यर्त्यूर्णोतीनामिति यङन्तादप्रत्ययादित्यकारस्तदातोलोपे यलोपे चाटाटेति भवति।'जागर्त्तेरकारो वेति'। वाशब्दात्पक्षे श, तदा सार्व धातुके यक्, जाग्रोविचिण्णल्ङित्स्विति गुण ॥

"गुरोश्च हल" ॥ प्रकृतस्य धातोर्हला विशेषणात्तदन्तविधिरित्याह । 'हलन्तो यो धातुरिति'। अज्विशेषवाचिनो गुरुशब्दस्य हलन्ते धातौ न मुख्या वृत्ति सम्भवतीति तद्वति तच्छब्दो विज्ञायतइत्याह । 'गुरुमानिति'। विपर्ययस्तु न भवति गुर्वन्तो यो धातुर्हल्वानिति चेष्टाया मनध्वनि आशसाया भूतवच्चेति निर्देशात् । 'कुण्डा हुण्डेति'। कुडि दाहे हुडि सघाते ॥

"षिद्भिदादिभ्यो ऽङ्" ॥ 'गणपरिपठितेष्विति'। गणे तावद्भिदा छिदेत्यङन्ता एव समुदाया पठ्यन्ते तेषु भिदिच्छिदिप्रभृतयो ऽङ प्रकृतयो यास्ता इह भिदादिशब्देन निर्दिश्यन्तइत्यर्थ, कुत एतत्, धात्वधिकारात्, भिदादिभ्यो धातुभ्य इति, भिदिर् विदारणे, छिदिर् द्वैधीकरणे, विद ज्ञाने, क्षिप प्रेरणे, गुहू सवरणे, डुधाञ् धारणपोषणयो, मिधृ मेधृ हिसासक्लेशनयो, ऋ गतौ, हृञ् हरणे, क्षि क्षये । अथ वा क्षि निवासगत्यो, तॄ प्लवनतरणयो, धृञ् धारणे, लिख अक्षरविन्यासे, चुद प्रेरणे, पीड अवगाहने, डुवप् बीजतन्तुसन्ताने, वस निवासे, मृजूष् शुद्धौ, क्रप कृपायामित्येता वेदितव्या । 'जरेति'। ऋदृशोऽङि गुण । 'गुहा गिर्योषध्योरिति'। गिरिशब्देन तदेकदेश उच्यते, अन्यत्र गूढि क्तिचेव भवति। 'आरा हारा कारा तारा धारेति'। गुणे कृते दीर्घत्व च निपात्यते। 'रेखा लेखेति'। लिखे पक्षे लकारस्य रेफो निपात्यते गुणश्च । 'चूडेति'। चुदेर्डत्व दीर्घत्व च निपात्यते। 'भित्तिरन्येति'। भिद्यत इति भित्ति कुड्यम्, छित्तिश्छिद्रम । 'आरा शस्त्र्यामिति'। शस्त्री शस्त्रजाति स्वभावाच्च विशेष परिगृह्यते, आरा प्रतोद, अर्यन्ते प्रेयन्तेनयाश्वा इति कृत्वा । 'आर्त्तिरन्येति'। आङोर्त्तेश्चोपसर्गादृति धाताविति वृद्धि । धार्यते प्रपात्यतइति धारा । 'धृतिरन्येति'। प्रीतिर्धैर्य च ॥

"चिन्तिपूजिकथिकुम्बिचर्चश्च" ॥ 'युचि प्राप्तइति'। सर्वेषामेव णयन्तत्वात् । कुम्बा अयम् । उदीचीनकुम्बा शम्यामिति हि दृश्यते, चकारोनुक्तसमुच्चयार्थस्तुलयतेस्तुला, अथ गुरोश्चहल इत्यस्यानन्तर कस्मान्न कृत किमङ्विधानेन, तत्रापि कर्त्तव्य कोन्वत्र विशेष, अपर

आह अङ्विधानसामर्थ्यात्पक्षे णिलोपो न भवति चिन्तियेत्यादि भव तीति, नात्राप्तभाषितमस्ति ॥

"आतश्चोपसर्गे"॥ 'अदन्तुरोरित्यादि'। उपसर्गे यादृशी वृत्ति प्रत्ययोत्पत्तिलक्षणा तादृश्येव तयोरपि भवतीत्यर्थस्तत्र अदृाशब्दस्तारका दिपाठात्सिद्ध, यदयमन्तर्द्धावित्युपसर्गनिबन्धन क्किप्रत्यय निर्द्दिशति तद् ज्ञापयति अन्त शब्द उपसर्गवृत्तिरिति, एव च छत्वान्तर्णयतीत्युपसर्गा दसमासेपीति णत्वमपि भवति ॥

"ण्यासश्रन्थो युच्"॥ 'ण्यद्भविष्यतीति'। ननु वासरूपविधिना ण्यत्स्यात् स चास्त्रियामिति प्रतिषिद्धस्तत्राह। 'वासरूपप्रतिषेधश्चेति'। 'उत्सर्गापवादस्येति'। समाहारद्वन्द्व, द्वयोरप्युत्सर्गापवादयो स्त्र्यधिका रावस्थितयोरित्यर्थ । 'घट्टिवन्दिविदिभ्यश्चेति'। विदिर्लाभार्थो गृह्यते न ज्ञानार्थो विदचेतनाख्याननिवासेष्वित्यस्यैव चुरादेर्वेदनेति ज्ञाने सिद्धत्वात, न च वेत्ते क्तिनो निवृत्त्यर्थ वचन सवित्तिरिति दर्शनात्। 'अन्वेषणेति'। इष आभीक्ष्ण्ये इष गताविति वा, युचश्चकारश्चिन्त्यप्रयोजन उदात्त इति हि वर्त्तते तत्सामर्थ्यादन्तोदात्तत्व भविष्यति, प्रत्ययस्वरेणैवाद्युदात्तत्व सिद्धे ॥

"रोगाख्याया ण्वुल्बहुलम्"॥ 'आख्याग्रहणमित्यादि'। यदि प्रत्य यान्त रोगस्य नाम भवति एव प्रत्ययो भवति नान्यथेत्येवमर्थमाख्याग्रहण मित्यर्थ, तेन पदान्तरद्योत्ये रोगे न भवति, बुभुक्षा भस्मकेनेति भस्मको नाम रोगविशेषस्तत्राशितपीतादिक शरीरस्य व्यापक न भवति सर्वदा च बुभुक्षा भवति। 'बहुलग्रहण व्यभिचारार्थमिति'। क्वचित्प्रवृत्ति क्वचिदप्र वृत्ति क्वचिद्विभाषा क्वचिदन्यदेवेत्यय व्यभिचार । 'प्रच्छर्द्दिकेति'। छर्द्द वमने, वमि मुहुर्मुहु प्रवाहयति प्रवर्त्तयतीति ग्रहणी प्रवाहिका। 'विच र्च्चिकेति'। चर्च्च अध्ययने प्रत्ययोपसर्गाभ्या रोगप्रतीति, पामा विचर्च्चिका शिरोर्त्ति शिरस्तोद, अर्द्द हिसाया तितुत्रेतीडभाव पूर्वपदस्य रुत्वमतो रो रप्लुतादित्युत्वमाद्गुण एङ पदान्तादति। 'धात्वर्थनिर्द्देश इति'। क्रिया निर्द्देशइत्यर्थ । 'इक्श्तिपौ धातुनिर्द्देश इति'। धात्वनुकरणाइत्यर्थ, बहु

लवचनाच्च क्वचिन्न भवति गुप्तिज्किद्भ्य सन्मान्बधदान्शान्भ्य इति, श्तिप शित्करणसामर्थ्यादकर्तृवाचिन्यप्येतस्मिन् शबादयो भवन्ति, एवमभावकर्मवाचिन्यपि क्वचिच्छगपि भवति यथा, विभाषा लीयतेरत्र लीलिडोर्यका निर्देश कृत, श्यनि तु लीड एव ग्रहण स्यात् न तु लीनाते, कथ पुन शित्करणस्य सामर्थ्यं यावता पिबतिर्जिघ्रतिरित्यादौ श्तिपि पिबाद्यादेशार्थं ग्लायत्यादावात्वप्रतिषेधार्थं च शित्करण स्यात्, एव तर्ह्युपसर्गात्सुनोतिसुवतिस्यति विभाषा लीयते भवतेर्थे उपसख्यान ध्यायते सम्प्रसारण चेत्येवमादिनिर्देशाच्छबादयो भविष्यन्ति । 'वर्णादिति'। वर्णवाचिनो वर्णानुकरणादित्यर्थ, न तु वर्णादुच्चार्यम णादिति, कि सिद्ध भवति ककार इत्यादौ साच्कादपि सघातात्कार सिद्धो भवति अकारस्योच्चारणार्थत्वेन वर्णमात्रस्यानुकार्यत्वात्, कक रस्येत्सञ्ज्ञाप्रयोजनाभावाच्च भवति बहुलग्रहणादस्य च्वौ यस्यति चेत्यादौ कारप्रत्ययो न भवति, बहुलवचनादेव क्वचिद्वर्णसङ्घातादनुकरणादपि भवति एवकार इति अधातुविहितत्वेपि कारप्रत्ययस्य कृत्सञ्ज्ञाधिकारसामर्थ्याद्भवति तेन कृदन्तत्वात्प्रातिपदिकसञ्ज्ञा भवति, इडागमस्त्वनार्द्धधातुकत्वान्न भवति, किमर्थं पुन कारप्रत्ययो विधीयते यावता करण कार, अस्य कारोकार इत्येवमस्तु, नैव शक्यम्, एव हि विज्ञायमाने ककारकरणमिति न स्यात् करोते पौनरुक्त्यात् । 'रादिफ इति'। कारस्यायमपवाद, कथ तर्हि रकारादीनि नामानि वासरूपविधीना कारोपि भविष्यति, [1]पूर्ववत्कृत्सञ्ज्ञाया प्रातिपदिकत्वम् । 'मत्वर्थाच्छ इति'। मतुना समानार्थो मत्वर्थस्तत स्वार्थे छ, बहुलवचनादभत्वेपि यस्येति लोप, पूर्ववत्प्रातिपदिकत्वम्, बहुलवचनात्क्वचिन्न भवति यथा तसौ मत्वर्थेइति, बहुलवचनादेव च मतुबर्थशब्दादपि भवति शैषिकान्मतुबर्थीयादिति । 'आजिरिति'। बहुलवचनाद्वीभावाभाव । 'इक्कृष्यादिभ्य इति'। धात्वर्थनिर्देशे ण्वुलोपवाद ॥

---

१ 'रेफइति' २ पुस्तके अधिकम ।

"सञ्ज्ञायाम्" ॥ उद्दाल श्लेष्मातकस्तस्य पुष्पाणि भज्यन्ते यस्यां सा उद्दालपुष्पभञ्जिका, वरणपुष्पाणि प्रचीयन्ते यस्यां वरणपुष्प प्रचायिका, अभ्यूष पूलिकाऽपूपविशेष स खाद्यते यस्यां साभ्यूषखादिका, तालस्य भञ्जन यस्या सा तालभञ्जिका, एव सालभञ्जिका ॥

"विभाषाख्यानपरिप्रश्नयोरिञ् च" ॥ ननु पूर्वं परिप्रश्न पश्चा दाख्यान भवति तत्कथ क्रमव्युदासेन सूत्रे पूर्वमाख्यानस्य निर्द्देश पश्चात्परिप्रश्नस्य तत्राह । 'पूर्व परिप्रश्न इत्यादि'। सत्य पूर्व प्रश्न पश्चा दाख्यानमिति सूत्रे तु लक्षणवशाद्विपर्यय आश्रित इत्यर्थ, स्वय तु व्यत्यासेन व्याचक्षाणोऽर्थक्रमेण व्याचष्टउदाहरति च । 'कारिकामिति'। ण्वुल् । 'क्रिया कृत्यामिति'। कृञ श च चकारात्क्यप् च । 'कृतिमिति'। योगविभागात् क्तिन् । 'गणिमिति'। गण सङ्ख्याने चुरादिरदन्त । 'गण नामिति । 'युच । 'एवमित्यादि'। का पाचिका पचा षित्त्वादङ्, पङ्क्ति स्थागापापचः इति क्तिन्, का याजि याजिकामि॰ का पाठि पा ठिका पठिति, तितुत्रेष्वग्रहादीनामिति वचनादिट् ॥

"पर्यायार्हर्णोत्पत्तिषु ण्वुच्" ॥ 'परिपाटीति'। पटे परिपूर्वादिञ जादिभ्य इति इञ्, तदन्तात्कृदिकारादक्तिन इति ङीष् । 'तद्योग्यतेति'। तच्छब्देन धात्वर्थ उच्यते। 'परस्मादिति'। धारेरुत्तमर्णइति सम्प्रदान सञ्ज्ञा,परस्येति तु पाठे परस्य वस्त्वित्यर्थ, धार्यते बध्यते, ग्रामगामिकेति कर्मणि षष्ठ्या समास । 'उदपादीति'। चिण् ते पद इति कर्त्तरि चिण् । 'स्वरार्थमिति'। चित इत्यन्तोदात्तत्व यथा स्यात् ण्वुलि तु लितीति प्रत्ययात्पूर्वमुदात्त स्यात् ॥

"आक्रोशे नञ्यनि" ॥ आक्रोश शपन न क्षेप स्वभावादकरणि रित्यादिक शपनवाक्यम् ॥

"कृत्यल्युटो बहुलम्" ॥ 'स्नानीयमिति'। करणे कृत्य । 'दानीय इति'। सम्प्रदाने अवसेचनादौ कर्मणि ल्युट् । 'प्रस्कन्दन प्रपतन इति'। कर्त्तरि। बहुलग्रहण न कर्त्तव्यमारम्भसामर्थ्यादेव कृत्यल्युटो यत्र विहिता

स्ततोन्यत्र भविष्यन्ति ततो बहुलग्रहणात्कृन्मात्रस्य स्वार्थव्यभिचार साधितो भवति तयोरेव कृत्यक्तखलर्था कर्त्तरि कृदित्यय त्वर्थनिर्द्देशो बाहुल्याद्भावादिषु भवन्ति क्वचिदेव त्वन्यत्रेति ज्ञापनार्थ । 'पादहारक इति'। कर्मणि एवुलि पञ्चम्यन्तस्य साधन कृतेति समास । 'गलेचोपक इति'। अमूर्द्धमस्तकादित्यलुक् ॥

"नपुसके भावे क्त"॥ ननु च तयोरेव कृत्यक्तखलर्था इति नपुसके भावे क्त सिद्ध, सत्य, भूते सिद्ध कालसामान्ये तु नपुसके न प्राप्नोतीत्ययमारम्भ, इह सकर्मकेभ्योपि यथा भावे घञादयो भवन्ति ओदनस्य पाक ओदनस्य भोजनमिति तथायमपि क्त सकर्मकेभ्यो भावे भवति अत्राकर्मकेभ्य इत्यवचनादिति केचिदाहु, अथ तदा कर्मणि का विभक्तिर्भवति कृद्योगलक्षणा कर्मणि षष्ठी सा निष्ठायोगे प्रतिषिध्यते, नपुके भावउपसख्यानमिति षष्ठी भविष्यति ओदनस्य भुक्तमुदकस्य पीतमिति, अस्मिन्पक्षएतदर्थोप्ययमारम्भो नहि तयोरेवेत्यनेन सकर्मकेभ्यो भावे क्त सिध्यति, अन्ये तु तयोरेवेत्येतदस्यापि क्तस्य विषयव्यवस्थापक मन्यन्ते तद्धि निष्ठेति विहितस्य क्तस्य भावमर्थ विधत्तेऽकर्मकेभ्य इति च विषय व्यवस्थापयति अस्य तु भावे क्त इत्यनुवादेनाकर्मकेभ्य इति विषय व्यवस्थापयति ॥

'ल्युट् च"॥ 'योगविभाग उत्तरार्थ इति'। उत्तरत्र ल्युट एवानुवृत्तिर्यथा स्यात् क्तस्य माभूदित्येवमर्थम् ॥

"कर्मणि च येन सस्पर्शात्कर्त्तु शरीरसुखम्"॥ कर्त्तुरिति कर्मणि षष्ठी उभयप्राप्तौ कर्मणीति नियमाद्येनेति कर्त्तरि तृतीया तदाह। 'येन कर्मणा सस्पृश्यमानस्येति'। कस्य शरीरसुखमित्यपेक्षाया कर्त्तु सन्निधानात्तस्यैव विज्ञायतइत्याह। 'कर्त्तु शरीरसुखमुत्पद्यतइति'। किमिद शरीरस्य सुखमिति, ननु शरीरव्यतिरिक्तस्यात्मनो धर्म सुख, सत्य, यस्मिन् सुखे समुत्पन्ने शरीरेपि स्वास्थ्यमुत्पद्यते तच्छरीरसुखमित्युच्यते। 'नित्यसमासार्थ वचनमिति'। कथ तर्ह्युभयप्राप्तौ कर्मणीत्यत्रोदाहृत साधु खलु पयस पान देवदत्तेनेति यत्र प्रतिकूलतया सुख नोत्पद्यते तत्र तदुदा

इत द्रष्टव्यम् । 'पय पान सुखमिति'। तत्र पानेन सुख न स्पर्शेन, इद तूदा हर्त्तुर्भवित चन्दनानुलेपन सुखमिति, नैष दोष, यत्र सस्पर्शनमन्तरेण न सुखमुत्पद्यते तद्विषयोपलक्षण सस्पर्शग्रहण तत्र स्पर्शनादेव सुख भवतु तत्पूर्वकात्पानादेर्वा सर्वत्र भविष्यति। 'तूलिकाया इति'। तूलेन निर्मित कशिपुस्तूलिका तत्र शयित्वे.त्थान सुखम्। अग्निकुण्डस्योपासन मिति'। अत्राग्निकुण्डेनास्पृश्यमानस्यैव सुखम। 'गुरो स्नापनमिति'। यद्य प्यत्र गुरु सुखानुभवस्य कर्त्ता तथापि न तदत्राश्रितमव्यभिचारात् किं तर्हि ल्युट्प्रकृतौ यत्कर्तृत्व तदाश्रित तदाह। 'स्नापयतेर्न गुरु कर्त्तेति'। 'मा नसी तु प्रीतिरिति'। पुत्रेण बलवत्परिष्वज्यमानस्य शरीरखेद एव भवति मानसी तु प्रीति, ननु प्रत्युदाहरणेष्वपि सर्वत्र ल्युट् प्रयुज्यते तत्कथ प्रत्युदाहरणत्व तत्राह। 'सर्वत्रासमास प्रत्युदाह्रियतइति'॥

"करणाधिकरणयोश्च"॥ 'करणे चाधिकरणे चाभिधेयइति'। उपपदे तु करणाधिकरणे न भवत करणाधिकरणयोरित्यत एव निर्द्देशात्, क्रियते ऽनेनेति करणम् अधिक्रियतेऽस्मिन्नित्यधिकरणमिति करणाधिकरण साधनौ ह्येतौ, यद्येव सति निर्द्देशे प्रत्ययविधान सति च प्रत्ययविधाने नि र्द्देश इतीतरेतराश्रय प्राप्नोति, न, नित्यत्वाच्छब्दाना नास्मान्निर्द्देशात्करणा धिकरणशब्दौ स्त । 'इध्मप्रव्रश्चन इति'। 'कर्मणि षष्ठ्या समास दात्रा दिरुच्यते। 'पलाशशातन इति'। शद्लृ शातने हेतुमण्णिच्, शदेरगतौ त इति तत्व, येन दण्डेन वृक्षस्य पर्णानि पात्यन्ते स एवमुच्यते, गोदोहनी सक्तुधानी पात्री, योगश्चाय येन नाप्राप्तिन्यायेन घञोपवाद, अजपौ स्त्री प्रत्ययाश्च परत्वाद्बाधते, उक्त हि, अजप्भ्या स्त्रीखलना स्त्रिया खलनौ विप्रतिषेधेनेति॥

"पुसि सज्ञाया घ प्रायेण"॥ 'दन्तच्छदाविति'। छद आवरणे चुरादि, छादेर्घे द्व्युपसर्गस्येति ह्रस्व, एत्यास्मिन्कुर्वन्ति व्यवहारमित्याकर उत्पत्तिस्थानम्॥

"गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च"॥ गावश्चरन्त्यस्मि न्निति रूढिशब्दोय विषयपर्याय, तस्य यथाकथचिन्निर्वचन तथा च गो

चर इन्द्रियगोचर इत्याद्यपि। 'सञ्चरन्तेनेनेति'। समस्तृतीयायुक्तादित्या त्मनेपदम्, सञ्चरो मार्ग, वह स्कन्ध, व्रजो गोष्ठम, व्यजस्तालवृन्तम्, आपण पण्यस्थान, निगमश्छन्द, अय योग शक्योऽवक्तु, पूर्वेणैव घ सिद्ध, हलश्चेति घञ् कस्मान्न भवति, प्रायेणग्रहण तत्रानुवर्तते यथा कषो निकष इत्यत्र घञ् न भवति एव गोचरादिष्वपि न भविष्यति ॥

"अवे तृस्त्रोर्घञ्"॥ अवतारो कूपादि, अवस्तारो जवनिकादि, नद्यवतारस्तीर्थम् । 'प्रायेणग्रहणानुवृत्तेरसञ्ज्ञायामपि भवतीति'। ननु घञ् विधेय प्रधान तस्य प्रायग्रहणमुपाधिस्ततश्च सञ्ज्ञायामेव क्वचिच्च भवतीत्यर्थ स्यात्, एव मन्यते, सञ्ज्ञायामित्युपाधेरेव प्रायग्रहणमुपाधिर्नो पाधेरुपाधिर्भवति विशेषणस्यैव वा विशेषणमिति तु नाश्रीयते लघ्वानु रोधादिति ॥

"हलश्च" ॥ लेखो लेखनी, वेष्टो वस्त्रादि, वेष्ट वेष्टने, विद्येते ज्ञायेते अनेन धर्माधर्माविति वेद, अपमृज्यतेनेन व्याध्यादिरित्यपामार्गो वीरुद्विशेष वीमार्ग समूहनी, पूर्ववत्कुत्वदीर्घत्वे ॥

"अध्यायन्यायोद्यावसहाराश्च"॥ 'आव्रयन्तीति'। एत्यवयन्ती त्यर्थ । 'चकारोनुक्तसमुच्चयार्थ इति'। घञ्विधाववहारावायानामुप सख्यानमिति वार्त्तिक, वृत्तिकारस्तु आधारावायशब्दौ सूत्रे प्रक्षिप्य चका रेणावहारशब्द साधयति स्म विचित्रा हि वृत्ते कृतिर्वृत्तिकारेण ॥

"उदङ्को ऽनुदके" ॥ तैलमुदच्यते, उद्ध्रियतेस्मिन्निति तैलोदक चर्ममय भाजनम् । 'घ कस्माद्विति'। पुसि सञ्ज्ञायामित्यादिना घे प्राप्ते घञ्त्रि हित, ततश्च तेन मुक्ते घ एव भवितुमर्हतीति भाव । 'विशेषाभावादिति'। ननु घे सति प्रत्ययस्वरो घञि ञित्स्वरेणाद्युदात्त तत्कथ विशेषाभावस्तत्राह । 'घञ्यपि हीत्यादि' ॥

"जालमानाय" ॥ जल धात्यदृत्यतो ज्वलितिकसन्तेभ्यो ण इति णे कृते जालमिति भवति, आनीयन्ते मत्स्यादयोनेनेत्यानाय ॥

"खनो घ च" ॥ घित्करण किमर्थ यावता न खन कश्चिदव यव कुत्वभागस्ति ज्ञापनार्थं तु एतज् ज्ञापयति अन्येभ्योप्यय भवतीति

तेन भजेभग पदे पद करणे घ, खल सञ्चलने ऽधिकरणे घ खल एव मादि सिद्ध भवति, आखनादय खनित्रवचना ॥

"ईषद्दु सुषु कृच्छ्राकृच्छ्रार्थेषु खल्" ॥ 'तद्दुर इति'। सुदुरो रधिकरणइतिनिर्देशाद्दु शब्दो रेफान्तोऽप्यस्ति । 'सम्भवादिति'। दुर एव कृच्छ्रे सम्भव इतरयोरेवाकृच्छ्रेत सामान्येनोक्तावपि विशेषणस्य विषय विभागो लभ्यतइति भाव । 'ईषत्कार्यमिति'। मनागित्यर्थे ईषच्छब्द ॥

"कर्तृकर्मणोश्च भूकृञो" ॥ 'कर्त्तरि कर्मणि चोपपदइति'। प्रत्ययार्थत्व तु कर्तृकर्मणोर्न भवति चकारस्योपपदसमुच्चयार्थत्वात् । कि च यदि तयो प्रत्ययार्थत्व स्यादीषदादिष्वेवोपपदेषु प्रत्यय स्यात्तत्तश्च खित्करणमनर्थक स्याद् अनव्ययस्य हि मुम् विधीयते तस्मात्सूक्त कर्त्तरि कर्मणि चोपपदइति, अत्र चकार सन्नियोगार्थे क्रियते, यदा कर्तृ कर्मणोरीषदादीना च युगपदुपपदत्व तदा प्रत्ययो भवति समासस्तु युगपत्पर्यायेण वा भवति कि पुनरत्र परमुपपद कर्तृकर्मणी, कुत एतत् खल खित्करणात्, तद्धि मुमर्थ मुमागमश्चानव्ययस्य तत्रेषदादीना धातो-श्चानन्तर्ये खित्करणमनर्थक स्यात्, ननु माभूदीषदो धातोश्चानन्तर्य यत्रैतन्नास्ति ते प्राग्धातोरिति यत्र त्वस्ति सुदुरोस्तत्र तयोरेव प्राक् प्रयोगो युक्त खित्करण त्वीषदाढ्यभवन्तीमित्यादौ मुमर्थ स्यात् सुदु रोरपि कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति तत्रापि मुमर्थ स्यात् यथोदिकूले रुजिवहो कूलमुद्रुज इति, वक्तव्योत्र परिहार कृत्यल्युटो बहुलमिति, बहुलग्रहण वात्राश्रयणीयम् । 'ईषदाढ्यभवमिति'। अना ढ्येन भवता सुखेनाढ्येन भूयतइत्यर्थ । 'ईषदाढ्यकर इति'। अनाढ्यो देवदत्त सुखेनाढ्य क्रियतइत्यर्थ । 'स्वाढ्येन भूयतइति'। प्रमाद पाठोयम् अत्र हि खलभावात्सुशब्दस्य धातो प्राक् प्रयोगेण भाव्य तस्मा द्वाढ्येन सुभूयतइति पाठ ॥

"अन्येभ्योपि दृश्यते" ॥ 'अन्येभ्योपि धातुभ्यो गत्यर्थेभ्य इति'। गत्यर्थेभ्यो येन्ये धातवस्तेभ्य इत्यर्थ, अथ वा नञोत्र प्रश्लेष अन्येभ्योपि धातुभ्य, कोर्थ, अगत्यर्थेभ्य इति, । 'भाषायामिति'। छन्दसीत्यधि

कारादयमारम्भ, शासु अनुशिष्टौ, युध सम्प्रहारे, दृशिर् प्रेक्षणे, ञिधृषा प्रागल्भ्ये, मृष तितिक्षायाम् ॥

'वर्त्तमानसामीप्ये वर्त्तमानवद्वा" ॥ अत्र केचिद्व्याचक्षते समीपस्य भाव सामीप्य भावे ष्यञ, वर्त्तमानस्य सामीप्य वर्तमानसामीप्य षष्ठी समास, वर्त्तमानस्य भूतभविष्यन्तौ प्रति यत्सामीप्य तत्र वर्त्तमानवत्प्रत्ययातिदेशोनर्थको ये हि वर्त्तमाने प्रत्ययास्ते समीपभूतेपि तस्मिन् भवन्त्येव, अतो वर्त्तमान प्रति भूतभविष्यतोर्यत्सामीप्य तदत्र वर्त्तमानसामीप्यमित्युच्यते समीपद्वारकाच्च वर्त्तमानस्य सामीप्येनाभिसम्बन्धात्समासो नानुपपन्नो यथा देवदत्तस्य गुरुकुलमिति, गुणेन नेति प्रतिषेधोपि न भवति यस्माद्गुणशब्दस्य सम्बन्धिशब्दत्वाद्गुणाक्षिप्तस्य गुणिन एव समासनिषेधो न च वर्त्तमान सामीप्यस्य गुणी, भूतभविष्यतोस्तद्गुणित्वादिति तदिद क्लिष्ट व्याख्यान ष्यञ्निर्द्देशश्च केवल गौरवायैव स्यादित्यन्यथा व्याचष्टे। 'समीपमेव सामीप्यमिति'। न चास्मिन् पक्षे ष्यञो वैयर्थ्यमित्याह। 'ष्यञ स्वार्थिकत्व ज्ञाप्यतइति'। स्वार्थेपि ष्यञ् भवतीति एतमर्थं ज्ञापयितु ष्यञा निर्द्देश कृत इत्यर्थ। 'चातुर्वर्ण्यादिसिद्ध्यर्थमिति'। आदिशब्देन चातुराश्रम्यमन्यस्य भावोन्यभावोन्यभाव एवान्यभाव्यमित्येवमादीना ग्रहणम्। 'कदा देवदत्त आगतोसीति'। भूतकालेन प्रश्न, उदाहरणे भूतकालाभिव्यक्तयेयमेष इत्यागमनाविनाभूत यद्रूप श्वेतपरिकरबन्धादियुक्त तद्रूप प्रतिनिर्द्दिश्यते, इदानीमागममित्यर्थं, एव च कदेति प्रश्ने चोत्तर सङ्गच्छते सामीप्य च द्योतित भवति। 'आगममिति'। लुङ् मिपोम्भाव, ऌदित्त्वादङ्। 'कदा देवदत्त गमिष्यसीति'। अत्रापि भविष्यत्कालेन प्रश्न उदाहरणे भविष्यत्कालाभिव्यक्तये। 'गन्तास्मीति'। अनद्यतने लुट्, अत्रापि सामीप्य यथासम्भव द्रष्टव्यम्। अथ वत्करण किमर्थं यावतासत्यपि तस्मिन् प्रत्ययाधिकाराद्वर्त्तमाने ये प्रत्यया विहितास्ते वर्त्तमानसामीप्ये भवन्तीत्येषोर्थो लभ्यतएव नार्थो वत्करणेनात आह। 'वत्करण सर्वसादृश्यार्थमिति'। असति वत्करणे वर्त्तमाने ये प्रत्यया इत्यनेन प्रत्ययाना रूपमात्र लक्ष्येत ततश्च

सङ्करोपि स्यात्, अन्यस्माद्धातोर्यो वर्त्तमाने विहित प्रत्यय स धात्वन्त रादपि स्यात् वत्करणे तु सति सर्वसादृश्यावगते सङ्करो न भवति, सर्वसादृश्यमेव दर्शयति । 'येन विशेषणेनेति' । आदिशब्देनोपाधेरभि धेयस्य च ग्रहणम् । 'पचमानो यजमान इति' । वर्त्तमाने पूङ्यजो शानन्विहित सामीप्ये स ताभ्यामेव भवति । 'अलङ्करिष्णुरिति' । त च्छीलादिविशिष्टे कर्त्तर्यलम्पूर्वात्कृञ इष्णुज्विहित स सामीप्येपि तस्मा देव तत्पूर्वादेव तस्मिन्नेवार्थे भवति 'यस्तु पूर्वस्मिन् सवत्सरे यो हि मन्यते इत्यादिना प्रतिपत्तृविशेष प्रतिप्रकरण प्रत्याचष्टे । 'कालान्तरगति स्त्विति' । कालान्तर वर्त्तमानसमीपो भूतो भविष्यश्च कालस्तस्य या गति प्रतीति सा ऽय गच्छामीत्यतो वाक्यात् कदा देवदत्त गमि ष्यसीत्यस्योत्तरत्वेन प्रयुक्ताद्भवति, तत किमित्यत्राह । 'न चेति' । वाक्यार्थप्रतिपत्तारमिति' । वाक्यार्थोऽय न पदार्थ इति य प्रतिपद्यते स वाक्यार्थप्रतिपत्ता, कर्मणि षष्ठ्या समास, कर्त्तरि चेति प्रतिषेधस्त्व नित्यो जनिकर्त्तुरिति निर्देशात् शेषषष्ठ्या वा समास । 'प्रकरणमिति' । इत आरभ्याष्टसूत्री प्रकरणशब्देनोच्यते । 'तथा च श्व करिष्यतीत्यादि'। यदि वाक्यगम्योपि काल पदसस्कारउपयुज्यते तदा नैवमाद्युपपद्यते अनद्यतने लुटेव भवितव्यमिति कृत्वा ॥

"आशसायां भूतवच्च" ॥ 'तस्याश्च भविष्यत्कालो विषय इति'। भविष्यत्कालोस्येति भविष्यत्कालो धात्वर्थ स आशसाविषय, सा तु वर्त्तमानकालैव, एव च सामर्थ्याद्भविष्यद्विषयोयमतिदेशो विज्ञायत इत्याह।'भविष्यत्काल इति'। 'आशसायां गम्यमानायामिति' । आश स्यमानक्रियावचनाद्धातोरित्यर्थ । उपाध्यायश्चेदित्यादिकम् आशसावाक्य तत्रोपाध्यायागमन व्याकरणाध्ययन चोभयमशस्यमानमित्युभयत्रापि प्रत्यय । 'अध्यगीष्महीति'। 'विभाषा लुङ्लृङो'रिति इङो गाङादेशो गाङ्कुटादिभ्य इति सिचो ङित्त्व, घुमास्थादिसूत्रेणेत्वम् । 'सामान्यातिदेश इति' । अत्र सूत्रे भूतशब्देन भूतमात्रमुच्यते न तु तद्विशेषोनद्यतन, सामान्यातिदेशे च विशेषो नातिदिश्यते ब्राह्मणवदस्मिन्क्षत्रिये वर्त्तितव्य

मित्युक्ते ब्राह्मणमात्रप्रयुक्तं कार्यं गम्यते न तु माठरादिविशेषप्रयुक्तं तेनानद्य
तनप्रयुक्तौ लङ्लिटौ न भवत इहानिष्पन्ने निष्पन्नशब्दः शिष्यः शासितव्यो
देवश्चेद्वृष्टो निष्पन्नाः शालय इति वस्तुस्वरूपकथनमेतचात्राशंसा तेन सूत्रे
णाप्राप्तिः, नैष दोषः, अप्रशालिबीजसंयोग एव निष्पत्तिः शालीनां तत्रैव
निष्पादेर्वृत्तेः, अत एव लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न क्ष्यति
देवश्चेद्वृष्टः सम्पत्स्यन्ते शालय इति उक्ते वक्तारो भवन्ति मैवं वोचः
सम्पन्नाः शालय इति ब्रूहीति, हेतुभूतकालसम्प्रेक्षितत्वात्सिद्धं हेतुभू
तस्य वर्षादेर्यः कालः स एव कार्यस्य सम्प्रेक्षितः स एव कार्यस्यापि
कालो व्यवस्थाप्यते कारणान्तरापेक्षाभावप्रतिपादनाय, ततश्च कारण
स्यैव कार्यरूपेण विवक्षितत्वादभेदाध्यवसायात्कारणस्य भूतत्वात्कार्य
स्यापि भूतत्वं सिद्धमित्यर्थः । इह तु कश्चिदध्वानं जिगमिषुः पश्यति
अमुष्मिन्नवकाशे कूपो भविष्यतीति अनद्यतने कूपो भवितेति समासाद्य
कूपोस्तीति अतिक्रम्य कूपोभूदिति, अतिक्रम्योषितस्त्वात् कूप आसीदिति,
अतिक्रम्योषित्वा विस्मृत्य कूपो बभूवेति तदत्र सर्वत्र कूपसत्ताया वर्त्तमानत्व
भूतभविष्यद्रूपत्वमिति सर्वत्र लडेव प्राप्नोति लुङादयस्तु वक्तव्याः, तदाहा
स्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः कर्त्तुर्विद्यमानार्थत्वादिति, भवन्तीशब्दो
लटः पूर्वाचार्याणां सञ्ज्ञा, यदि वचनेन वर्त्तमान एव लुङादयो विधीयन्ते
कूपोभूदिति प्रयोक्तव्ये कूपो भविष्यतीत्यपि प्रयुज्येत तस्माद्यथास्वमेता
विभक्तयः कालेषु प्रयुज्यन्ते, कथ,मिन्द्रियव्यापारस्य कालस्य कूपसत्तां प्रति
भेदकत्वेनाश्रयणात्तस्या अपि तत्कालत्वं ततश्चेन्द्रियव्यापारे भाविनि
भविष्यद्विभक्तिर्वर्त्तमाने वर्त्तमानविभक्तिर्भूते भूतविभक्तिरिति सिद्धमिष्टम्
उक्तं च ।

सत्तामिन्द्रियसम्बन्धात्सैव सत्ता विशेष्यते ।
भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥
अस्तित्वं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते ।
यः समासादनाद्भेदः स तत्र न विवक्षितः ॥

इति ॥

"क्षिप्रवचने लृट्" ॥ 'वचनग्रहणं पर्यायार्थमिति'। असति तस्मिन् स्वं रूपं शब्दस्येति वचनात्क्षिप्रशब्दएवोपपदे स्यात् सति तु पर्यायेष्वपि भवति, ननु भूतवच्चेत्यस्यायमपवादः, स च भविष्यत्कालविषयस्तत्र नेत्येव वक्तव्यं तस्मिन्प्रतिषिद्धे लृट् शेषे चेत्यनेनैव लृट् सिद्धः तत्किं लृड्ग्रहणेन तत्राह। 'नेति वक्तव्यमित्यादि'। नेत्युच्यमाने लृट् शेषे चेत्यनेन लङ्भ्वनद्य-तने न स्यात् लुटा बाधितत्वाद् अतो लुड्विषयेपि यथा स्यादिति लृड्ग्र-हणं क्रियतइत्यर्थः ॥

"आशंसावचने लिङ्" ॥ 'अधीयेति'। इङो लिङ् इटोत्, सीयुट् लिङ सलोपो धातोरियङ् उपसर्गेण सह सवर्णदीर्घत्वं, क्षिप्रवचने लृट् आशंसावचने लिङ् विप्रतिषेधेन। क्षिप्रवचने लृडित्यस्यावकाशः क्षिप्रम ध्येष्यामहे इति, आशंसावचने लिङित्यस्यावकाशः आशंसे युक्तोधीयी येति, इहोभयं प्राप्नोति आशंसे क्षिप्रमधीयीयेति लिङ् भवति विप्रति-षेधेन तदेतदुदाहरणे दर्शयति। 'आशंसे क्षिप्रमधीयीयेति'॥

"नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः" ॥ 'कालानां सामीप्य-मिति'। वर्त्तमानसामीप्यइत्यारभ्य कालप्रायत्वादस्य प्रकरणस्य सामा-न्येनोक्तेपि कालसम्बन्धिन एव सामीप्यस्याश्रयणमिति भावः। 'तुल्यजा तीयेनेति'। तत्रैव लोके सामीप्यव्यवहारादिति भावः। 'अदादिति'। गातिस्थेत्यादिना सिचो लुक्। 'अध्यापिपदिति'। इङो णिच्, क्रीङ्जीनां णावित्यात्वम्, अर्त्तिह्रीत्यादिना पुक्, लुङि चङि अजादेर्द्वितीयस्येति पिश ब्दस्य द्विर्वचनं णिलोपः। 'येयं पौर्णमास्यतिक्रान्तेति'। पौर्णमास्यन्तरेणा-व्यवहिता या पौर्णमासी तामधिकृत्येदमुच्यते सापि यद्यप्यमावास्ययान्या-भिश्च तिथिभिर्व्यवहिता तथापि तुल्यजातीयेन पौर्णमास्याख्येनाव्यवहित त्वात्सामीप्यं नातिवर्त्तते। 'आधितेति'। दधातेराङ्पूर्वस्य स्याध्वोरिच्चे तीत्वं, ह्रस्वादङ्गादिति सिचो लोपः। 'अयष्टेति'। झलो झलीति सिचो लोपः, व्रश्चादिसूत्रेण षत्वम्। 'अदितेति'। ददाते रूपं पूर्ववत्। 'यक्ष्यत-इति'। व्रश्चादिषत्वे षढोः कः सीति कत्वं, सर्वत्र स्वरितञित इत्यात्मनेपदम्, इह क्रियाप्रबन्धसामीप्ययोरद्यतनप्रत्ययौ लुड्लृटाविष्येते नानद्यतनप्रत्ययौ

लङ्लृटौ, तौ च लुङ्लृटावद्यतनवत् क्रियाप्रबन्धसामीप्ययोरित्युच्यमानेपि सिद्धत एव किमर्थं द्वौ प्रतिषेधावुच्येते इत्यत आह। 'द्वौ प्रतिषेधाविति'। 'यथाप्राप्तस्येति'। यथा येन प्रकारेण प्राप्त प्राप्तिर्यस्येति बहुव्रीहि, अव्ययीभावे त्वम्भाव स्यात्, इहाद्यतनवचने सति विधानमिद विज्ञायेत तत्र लङ्विधिप्रसङ्गे पूर्वविधाने ह्यद्यतनसशब्देन विहितस्य कस्य चित्प्र त्यस्याभावादद्यतने दृष्टस्यातिदेशो लट् चाप्यद्यतने दृष्टस्तेन तस्यापि भूत भविष्यतो प्रसङ्गो लुङ्लृटोश्चायथाकाल विधि प्रसज्येत लुङो विषये लृट् लृटश्च विषये लुङ्। ननु च वत्करणात्सादृश्यार्थात्सङ्करो न भविष्यति। नैतदस्ति। इह लुङ्लृटौ भूतभविष्यतोरद्यतने च दृष्टौ तत्राद्यतन वदित्युच्यमाने तस्मिन्नेवाद्यतने तयोरतिदेशोऽनर्थक इति कश्चिदशो हातव्यस्तत्राद्यतनाशत्यागेनातिदेशे विज्ञायमाने भूतानद्यतने लुङ् भविष्यद नद्यतने लृडिति सिद्धम्, यदा तु भूतभविष्यदशपरित्यागेनातिदेश स्तदा भूताद्यतने दृष्टस्य भविष्यदद्यतने भविष्यदनद्यतने च दृष्टस्य भूताद्यतने विधानमिति सङ्कर स्यादेव, लङ् चोभयत्र प्रसज्येत, वत्करण तु यस्माद्धातोर्यस्मिन्नुपाधौ य प्रत्ययो विहित स तस्मादेव तस्मिन्नुपाधावेव यथा स्यादित्येवमर्थ स्यात्तेन पूङ्यजो शानन्नित्यादौ कालव्यत्यास एव भवति न धात्वादिव्यत्यास', यदि पुनरय द्वौ प्रतिषेधौ कृत्वा तूष्णीमास्ते स्वैरेव विधायकैर्लङादय उत्सर्गा स्वेषु स्वेषु कालेषु अपवादविनिर्मुक्तेषु भवन्तीति न सङ्करप्रसङ्ग, अतो यथाप्राप्तस्याभ्यनुज्ञानाय वति किं तर्हि मतुप्, अनद्यतनमस्यास्तीत्यनद्यतनवत्, सामान्यविवक्षाया नपुसकत्वम्। 'अनद्यतनवत्प्रत्ययविधिर्न भवतीति'। अस्याप्यनद्यतनवाश्चासौ प्रत्ययश्च तस्य विधिरित्यर्थ इति सर्वथा यदनद्यतने विहित तत्सर्व न भवति। वृत्तौ लङ्लुटौ विहितौ तयो प्रतिषेध इत्युपलक्षणम्॥

"भविष्यति मर्यादावचनेऽवरस्मिन्"॥ 'अक्रियाप्रबन्धार्थमसामीप्यार्थं च वचनमिति'। क्रियाप्रबन्धसामीप्ययोरिति नानुवर्त्तते तदनुवृत्तौ हि नियमार्थमेतत् स्याद् भविष्यत्येव मर्यादावचनएवावरस्मिन्नेवेति वा

विधिनियमसम्भवे च विधिरेव ज्यायानिति भाव । 'मर्यादावचने सतीति'। मर्यादोक्तौ सत्यामित्यर्थ , वचनग्रहणमभिविध्यर्थ वचनग्रहणे हि सति मर्यादामात्रवचने मर्यादावचनइत्यर्थो भवति सैव हि मर्यादा यदा कार्येणाभिसम्बद्ध्यते तदाभिविधिरित्युच्यते। 'अवरस्मिन्नविभागइति' । अपरभागविषयश्चेद्भूतार्थो भवतीत्यर्थ , अपरस्मिन्निति वचनाद्यस्य मर्यादा तस्य द्वौ भागौ कल्पयितव्याविति गम्यते। 'गन्तव्य इति'। अध्वगमनस्य भविष्यत्व दर्शयस्तत्र कर्त्तव्यस्य भोजनादेर्भविष्यत्व दर्शयति। 'तस्य यद परमिति'। अनेनाध्वनो विभागो द्विरित्यनेनापि क्रियाप्रबन्धाभावो द्विरेव नानवरतमिति । 'योयमध्वागत इति' । भूतकालता दर्शयति । 'अध्यैमहीति' । इडो लङ्, शपो लुक्, आडजादीनाम्, आटश्च । 'अभुञ्ज्महीति'। भुजोनवनइत्यात्मनेपद, श्नसोरल्लोप , चुत्वम्। 'तत्र उत्तरसूत्रे विशेष वक्ष्यतीति' । अनहोरात्राणामित्यनेन ॥

"कालविभागे चानहोरात्राणाम्" ॥ 'कालमर्यादाविभागे सतीति'। मर्यादा च विभागश्च मर्यादाविभाग समाहारद्वन्द्व , तेन कालशब्दस्य षष्ठीसमास । 'न चेदहोरात्रसम्बन्धी विभाग इति'। एतेनानहोरात्राणामिति सम्बन्धसामान्ये षष्ठी न कर्तृकर्मणोरिति दशयति, एव सति यदिष्ट सिद्ध तद्दर्शयति। 'तैरिति'। तैरन्यस्य कालस्य विभागोन्येन वा तेषा तैरेव वा तेषा सर्वथा प्रतिषेध । ननु पूर्वसूत्रएवानहोरात्राणामिति वक्तव्यमेवमपि हि सामर्थ्यात्कालविभागस्यैव प्रतिषेधो विज्ञायते नहि देशविभागस्याहोरात्रै सम्बन्धोस्ति तत्कि योगविभागेन तत्राह। 'योगविभाग उत्तरार्थ इति'। उत्तरसूत्रे कालविभागएव विभाषा यथा स्याद्देशविभागे माभूदिति, आग्रहायणी मार्गशीर्षी। 'त्रिविधमुदाहरणमिति । प्रथम तैर्विभागस्य द्वितीय तेषा विभागस्य तृतीय तैस्तेषा,महोरात्रसस्पर्शे अहोरात्रगन्धे, एतच्च प्रसज्यप्रतिषेधसमाश्रयणाल्लभ्यते, दर्शितश्च प्रसज्यप्रतिषेधो न चेदहोरात्रसम्बन्धी विभाग इति, अन्यथानहोरात्रसम्बन्धिनि विभागइत्यवक्ष्यत् ॥

"लिङ्निमित्ते लृङ् क्रियातिपत्तौ" ॥ 'कुतश्चिद्वैगुण्यादिति'। प्रतिबन्धकोदय सामग्रीवैकल्य वा वैगुण्यम्। 'दक्षिणेन मार्गेण न शकट पर्याभविष्यदिति'। तस्य मार्गस्य ऋजुत्वात्स्थाण्वादेरभावाच्च, पर्याभवन भङ्ग, कमलक कश्चित्पुरुष स शकटादीना विषमेष्वपि स्थानेषु मुसलाद्यवष्टम्भयोगेन नेता। 'अभोक्ष्यत भवान् घृतेनेति'। घृतमात्रस्यातिपत्तौ भोजनक्रियाभिनिर्वृत्तावपि लृङ् भवति कारणभेदाद्भिन्नैव भोजनक्रिया ततो घृतातिपत्तौ घृतभोजनक्रियाप्यतिपन्नैव। 'भविष्यत्कालविषयमेतद्वचनमिति'। कथ तर्हि भविष्यतोऽर्थस्येदानीमवगतिस्तत्राह। 'भविष्यदपर्याभवनमिति'। 'हेतुमत् तत्र हेतुभूतमिति'। एतेन लिङ्निमित्त हेतुहेतुमद्भाव दर्शयति। 'लिङ्गेन बुध्येति'। असकृत्प्राक्कमलकाह्वाने सति शकटापर्याभवन दृष्ट्वा भाविनोपि कलमकाह्वानस्य शकटापर्याभवन दृष्ट्वा भाविनोऽपि कलमकाह्वानस्य शकटापर्याभवनहेतुभूतत्व लिङ्गेन बुद्ध्वा, लिङ्ग पुन कलमकाह्वानत्व, भविष्यत्कलमकाह्वानमपि शकटापर्याभवनस्य हेतु कलमकाह्वानत्वात्पूर्वकलमकाह्वानवदिति एव बुध्येत्यर्थ। 'तदतिपत्तिमिति'। प्रकरणाद् द्विवचनान्तस्य समासस्तयोराह्वानापर्याभवनयोरतिपत्तिमित्यर्थस्तत्र कमलकस्य देशान्तरगमनादिना तदाह्वानस्यातिपत्तिरवसीयते तदतिपत्त्यैव च पर्याभवनस्याप्यतिपत्ति' शकटस्य गुरुतरभारारोपणादिना। 'भविष्यत्काल[1]योरतिपत्तिरितो वाक्याद्गम्यतइति'। नेदानीं कमलक आह्वातु शक्यते तच्च शकटमपि पराभविष्यत्येवेत्यवगमात् ॥

"भूते च" ॥ 'अचार्यो चङ्क्रम्यमाण इति'। भोक्तुकाम क्षुधा कुटिल गच्छन्नित्यर्थ। 'अपरश्च द्विजो ब्राह्मणार्थीति'। चङ्क्रम्यमाणो दृष्ट इत्यनुषङ्ग, ब्राह्मणार्थी भोक्तार मार्गयमाण इत्यर्थ। सोपि सभ्रमात्कुटिल गच्छति, तत किमित्यत आह। 'यदीत्यादि'। यदि दृष्टो भविष्यदिति क्वचित्पठ्यते तत्तु यदायद्योरुपसख्यानमिति यदि लिङ्निमित्तत्वात् लृङ् कि तूत्तरसूत्रेण विकल्पित, दृष्ट इत्येव तु पाठो युक्त। 'न तु भुक्तवानिति'। क्रियातिपत्ति दर्शयति, तत्र हेतु। 'अन्येन पथा स गत इति' ॥

[1] मुद्रितमूलपुस्तके विपर्ययोरित्यधिक दृश्यते।

"वोताप्यो"॥ 'वा आ उताप्योरिति'। आङ प्रश्लेष दर्शयति, तत्राङ उताप्योरित्यनेन सम्बन्धादल्पापेक्षत्वेनान्तरङ्गत्वाद्वा पूर्वं परेण सहाद्गुणे कृते पूर्वं प्रत्यन्तवद्भावाद्वोमाङोश्चेति पररूप यथा आ ऊढा-ओढा अद्य ओढा अद्योढा कदोढेति अत्रोताप्यो समर्थयोरिति यत्सम-म्यन्त तदवधित्वेनोपादीयते तत्र प्रकृतिवदनुकरण भवतीत्यनुकरणस्याप्य प्रत्यय इति प्रतिषेधेनाप्रातिपदिकत्वादाडोपि योगे पञ्चम्यभाव । 'मर्या दायामाङिति'। एतच्च विभाषा गर्हाप्रकृतौ प्रागुताप्यिभ्यामिति स्मरणा दवसीयते, गर्हाप्रकृतौ गर्हाविशिष्टे प्रकृत्यर्थे, गर्हाग्रहणमनवक्लृप्त्यादेरपि लिङ्निमित्तस्योपलक्षण विभाषा कथमि लिङ् चेति लिङ्निमित्ताभावा दुत्तरसूत्रातिक्रम ॥

"गर्हाया लडपिजात्वो"॥ 'कालसामान्येन प्राप्नोतीति'। विधी यते इत्यनेन भविष्यतीत्यादे कालविशेषवाचिनो निवृत्ति सूचयन् काल सामान्ये विधिरिति दर्शयति। 'कालविशेषविहिताश्चेत्यादि'। भाष्ये त्वेष निर्णयो गर्हाया लड्विधानानर्थक्य क्रियासमाप्तेरविवक्षितत्वात् ताच्छी ल्यप्रतिपादनेनात्र गर्हा ततश्च यदनेन क्रियते तत्सर्वं वृषलयाजनार्थ मिति सर्वदासौ वृषल याजयत्येव भवति ततश्च क्रियाया समाप्तिरवि वक्षितेति वर्तमाने लडित्येव लट् सिद्धि, यद्येव शतृशानचावपि प्राप्नुत इष्येते च शतृशानचावपि मा याजयन्त पश्य अपि मा याजमान पश्येति प्रत्युत सूत्रारम्भे सत्यवर्त्तमानकालविहितत्वाल्लुटस्तौ न प्राप्नुत इति दोषवानेव सूत्रारम्भ इति ॥

"विभाषा कथमि लिङ् च"॥ 'विभाषाग्रहणमित्यादि'। स्वस्मिन् स्वस्मिन् काले ये लडादयो विहितास्तेषा च बाधा माभूदित्येवमर्थमि त्यर्थं, यद्येव विभाषाग्रहणादेव लडपि भविष्यति नार्थश्चकारेण, सत्य, वर्त्तमाने सिद्ध्यति कालान्तरे तु न सिद्ध्यति तस्मात्तदर्थश्चकारेण लट समुच्चय । 'अत्र लिङ्निमित्तमस्तीति'। कथमीत्येतद्गर्हा च ॥

"किवृत्ते लिङ्लृटौ"॥ किवृत्ते लिप्सायामित्यत्र किवृत्त व्याख्या तम् इह किवृत्ते लृट् चेति वक्तव्य चकारात्प्रकृतो लिङ् भविष्यति नार्थो

लिङ्ग्रहणेन तत्राह । 'लिङ्ग्रहणमिति' । चकारेण लिङ इव लटोपि समुच्चय स्यात् तस्यापि प्रकृतत्वात्तस्मात्तन्निवृत्त्यर्थमिति भाव ॥

"अनवक्लृप्त्यमर्षयोरकिंवृत्तेपि" ॥ अपिग्रहण शक्यमकर्त्तु कथ यथोपकादिभ्योन्यतरस्यामद्वन्द्वइत्यत्राद्वन्द्वग्रहण द्वन्द्वाधिकारनिवृत्त्यर्थं तथेहाप्यकिंवृत्तग्रहण किंवृत्ताधिकारनिवृत्त्यर्थमस्मिन्निवृत्ते किंवृत्ते चाकिंवृत्ते च प्रत्ययद्वय भविष्यति तत्क्रियते विस्पष्टार्थं, तथाऽकिंवृत्त इत्यपि विस्पष्टार्थमेव, अस्वरितत्वादेव किंवृत्तइत्यस्याननुवृत्तेरविशेषेण प्रत्ययद्वय भविष्यति, आह च, किं वृत्तस्यानधिकारादुत्तरत्राकिंवृत्त ग्रहणानर्थक्यमिति, ननु चाकिंवृत्तग्रहणेन किंवृत्तादन्यत्पद पर्युदासाश्रयणेन गृह्यते तस्योपपदसज्ञा वक्ष्यामीत्यकिंवृत्तग्रहण स्यात् किं पुनरुपपदसज्ञाया प्रयोजन, समासो नातिङिति प्रतिषेधात्, यदा तर्हि ल्टट सत्सज्ञकौ भवतस्तदा समासो यथा स्यात् नास्य ल्टट सत्सज्ञकौ भवत ल्टट सद्वेत्यत्र भविष्यतीत्यधिकाराद्भविष्यतीत्येव विहितस्य ल्टटो ग्रहणमय तु कालमात्रे विधानाद्यद्यपि भवति तथापि भविष्यदधिकारविहितो न भवतीति नास्य शतृशानचौ भवत ॥

"किंकिलास्त्यर्थेषु ल्टट्" ॥ 'समुदाय उपपदमिति' । केवलस्य किंशब्दस्यानवक्लृप्त्यमर्षयोर्वृत्त्यसम्भवात् । 'लिङोपवाद इति' । पूर्वेण प्राप्तस्य । 'अस्ति नामेत्यादि' । भवत्कर्तृक वृषलयाजनमस्तीत्यर्थ, उक्त हि पच्यादय क्रिया भवतिक्रियाया कर्त्र्यो भवन्तीति ॥

"जातुयदोर्लिङ्" ॥ 'ल्टटोपवाद इति' । अनवक्लृप्त्यादिसूत्रेण लिङ्ल्टटोर्द्वयोरपि प्राप्तयोर्लिङेव यथा स्यात् ल्टणमाभूदित्येवमर्थ इत्यर्थ । 'यदायद्योरुपसङ्ख्यानमिति' । सूत्रवत् ल्टटोपवाद ॥

"यच्चयत्रयो" ॥ 'ल्टट एव[1]ापवाद इति' । पूर्ववत्प्राप्तस्य, एवकार पौनर्वचनिक । 'योगविभाग उतरार्थ इति' । उत्तरत्र यच्चयत्रयो

---

१ मुद्रितमूलपुस्तके एवेति नास्ति ।

रेवानुवृत्तिर्यथा स्यात् जातुयदोर्माभूदिति, इहानवक्लृप्त्यमर्षौ द्वौ यच्च यत्रयोरित्युपपदे अपि द्वे एव ततश्च यथासङ्ख्यं प्राप्नोति तत्राह । 'यथासङ्ख्यमिह नेष्यतइति' । पूर्ववल्लक्षणव्यभिचारचिह्नात् बह्वच पूर्वनिपातात् ॥

"गर्हायां च" ॥ दरिद्रश्चेद्वृषलयाजनमपि युक्तं स्यात् तत उक्तं 'मृद्ध इति' । चद्धस्याप्युपभोगबाहुल्येन सम्भाव्येत अत उक्तं 'वृद्ध इति' । वृद्धस्यापि जातिमात्रब्राह्मणस्य युक्तं स्यादत उक्तं 'सद्ब्राह्मण इति' । सद्ध शज सदाचारश्चेत्यर्थतो गर्हामर्हं इति ॥

"शेषे लृडयदौ" ॥ 'यच्चयत्राभ्यामिति' । चित्रीकरणापेक्षस्तु शेषो न भवति तस्येह स्वरितत्वेनाधिकारात । 'आश्चर्यं यदि स भुञ्जीतेति' । अत्रानवक्लृप्तिराश्चर्यं च द्वयं गम्यते तत्राश्चर्यनिमित्ते लृटि प्रतिषिद्धे जातुयदोर्लिङ्विधाने यदायद्योरुपसङ्ख्यानमित्यनवक्लृप्तौ लिङ् । भाष्ये तु सम्भावनार्थो यदिशब्द प्रयुज्यते ततश्च सम्भावनमत्र तात्पर्यार्थो न चित्रीकरणं ततश्चायदाविति न वक्तव्यं लिङपि सम्भावनेऽलमित्यनेनैवेत्युक्तं यदाह, चित्रीकरणे यदिप्रतिषेधानर्थक्यमर्थान्यत्वादिति ॥

"उताप्योः समर्थयोर्लिङ्" ॥ 'समर्थयोरिति' । सूत्रे समशब्दस्य निपातनादतो लोप शकन्ध्वादित्वाद्वा पररूपत्वं सशब्द एव वा वृत्तौ समशब्देन समानार्थे यथा प्रोपाभ्यां समर्थाभ्याम् यथा सुखसमुखस्येत्यत्रेति भाव । 'प्रश्न प्रच्छादन च गम्यत इति' । आद्ये प्रश्नो गम्यते द्वितीये प्रच्छादन, ननु चापिशब्दोऽपि प्रश्ने दृष्ट , अप्यग्रणीर्मन्त्रकृतामृषीणाम् अपि प्रसन्नं हरिणेषु ते मन इति ततश्च प्रश्नेऽपि समानार्थत्वमनयोरिति उत दण्ड पतिष्यतीति प्रत्युदाहरणानुपपत्ति , एव मन्यतेऽप्यग्रणीरित्यादौ प्रष्टव्यमर्थान्तरमपेक्ष्य समुच्चयार्थ एवापिशब्द प्रश्नस्त्वर्थ प्रकरणादिना गम्यते तेन नानयो प्रश्ने समानार्थत्वमिति ॥

"कामप्रवेदनेऽकच्चिति" ॥ 'स्वाभिप्रायाविष्करणं कामप्रवेदनमिति' । एतदेवावयवार्थप्रकाशनेनोपपादयति । 'कामं इच्छेति' । 'मारावि

द त्वा पृच्छामीति'। माराविशब्द ददातीति माराविदो माराविरवो माकारीत्यर्थ, सन्नेषा शुकविशेषस्य त हस्ते निधाय कश्चिल्लालयति प्रावेत्यपि शुकस्यैव का चिदिष्टा, प्रायेण तु मातापितरौ पृच्छामीति पाठ, तत्र तदुपक्रम वाक्य मातापितरौ पृच्छामि किमत्र पृच्छ्यते कच्चिज्जीवति ते मातेति ॥

"सम्भावनेलमिति चेत्सिद्धाप्रयोगे"॥ 'योग्यताध्यवसानमिति'। योग्यताया निश्चय, एतदेव स्फोरयति। 'शक्तिश्रद्धानमिति'। शक्ति. सामर्थ्य श्रद्धायते विषयीक्रियते येन ज्ञानेन तत्तथोक्त तदिति, सम्भावनप र्याप्तिरित्येतेन पर्याप्ताविहालशब्दो न भूषणादावित्याह। 'यद्येव सम्भावन इति'। सप्तम्यन्तस्य कथमलमिति चेदित्येतद्विशेषणमुपपद्यतइत्याशङ्क्य विपरिणामेन व्याचष्टे।'तच्चेत्सम्भावनमिति'। सम्भावनमलमिति चावर्तते सम्भावने लिङ् भवति तच्चेत्सम्भावनमलमात्मक भवतीति, एव पर्यव सानेनालमा सम्बन्धोतीत्रेतिशब्दो न सम्बन्धनीय ततोलमित्यस्मिन् सिद्धाप्रयोगे सतीत्यन्वयोत्र चेच्छब्दो न सम्बन्धनीय सप्तम्यन्तेन सम्बन्धासम्भवात्, वृत्तौ तु वस्तुमात्र दर्शित सिद्धश्चेदलमोप्रयोग इति न पुनरत्र चेच्छब्दस्यान्वय। 'पर्याप्तमिति'। स्वकार्यनिर्वर्त्तने समर्थ स्वकार्य पुनस्तस्याविपरीतमविषयपरिच्छेदस्तद्दर्शयति। 'अवितथमिति'। अतथाभूतार्थविषयत्व ज्ञानस्य वैतथ्य यथा शुक्तिकाया रजतज्ञानस्य तद्विपरीतमवितथ तथाभूतार्थविषयमित्यर्थ। 'तदीदृशसम्भावनोपाधिक इति'। तदिति वाक्योपन्यासे ईदृशमलमर्थविशिष्ट सम्भावनमुपाधि र्यस्येति त्रिपदो बहुव्रीहि, क्वचित्त्वीदृशे सम्भावनोपाधिकइत्यसमास' पठ्यते तत्रेदृश इति न सङ्गच्छते न हि धात्वर्थस्य किञ्चिद्रूप प्राङ्गिर्दशित यदीदृशमित्युच्येत। 'सर्वलकाराणामपवाद इति'। सम्भावनस्य भविष्य द्विषयत्वाद्भविष्यद्विषयाणा सर्वलकाराणामित्यर्थ। 'अपि पर्वत शिरसा भिन्द्यादिति'। अत्र यत्पर्वतभेदविषय सामर्थ्य पुस सम्भाव्यते तद्यस्य भीमसेनादेर्विश्रुतएव तत्र सम्भावनमवितथमिति तद्विषयमुदाहरणम्। 'अपि द्रोणपाक भुञ्जीतेति'। यत्पक्वस्य भोजन तदेव पाकस्य भोजन

कर्मसाधनो वा पाकशब्द । 'विदेशस्थायी' देशान्तरगत । 'प्रायेणाग
मिष्यतीति' । प्रायिकत्वदक्षिणाक्षिस्पन्दनादेर्लिङ्गाभासादागमन सम्भाव्य
तत एतत्प्रयुज्यते तत्तथ्यमपि भवति विपरीतमपि भवति । 'अल
देवदत्त इति' । पर्याप्त हनिष्यतीत्यर्थ भाविविषयत्वात्सम्भाव
नस्य सर्वत्र लृट् प्रत्युदाहृत । अपरा व्याख्या सम्भावन भावि
वस्तूत्प्रेक्षणमसति विरुद्धप्रत्ययोपनिपाते भवितव्यमनेनेति ज्ञान यथा
प्रत्युदाहरणे प्रायेणागमिष्यतीति तस्य विशेषणमलमिति चेदिति
अलमिति चेत् तत्सम्भावनमिति विपरिणामेनान्वय, तत्र यथा घट
इति ज्ञान पट इति ज्ञानमित्युक्ते ज्ञानस्य विषयनिर्द्देश प्रतीयते तथेहा
पि सम्भावनाख्यस्य ज्ञानस्य विषयनिर्द्देशोयमलमिति चेत् तत्सम्भावनमल
मर्थविषय चेदित्यर्थ, अलमर्थश्च पर्याप्तिर्न भूषणादिर्धातोश्च प्रत्यय
विधानात्तदर्थगोचरमेव सामर्थ्य गृह्यते इम धात्वर्थमनुष्ठातु समर्थ इत्येव
रूप चेत् तत्सम्भावनमित्यर्थ, सिद्धाप्रयोगे कस्मिन् सन्निधानादलशब्द,
एव तावत्सूत्राक्षराणा निर्वाह वृत्तेस्तु । 'यत्क्रियासु योग्यताध्यवसान-
मिति'। तदिह सूत्रे जिघृक्षितस्य सम्भावनस्य लक्षण न सम्भवनमात्रस्य
अन्यथा प्रत्युदाहरणमनुपपन्न स्यात् न हि तत्र शक्तिश्रद्धान गम्यते
कथ पुनरत्रेदृश सम्भावन गृह्यत इत्यत्राह । 'तदिदानीमिति' तत्खलु
सम्भावनमेतत्सूत्रप्रणयनकालेस्मिन्सूत्रइत्यर्थ, अलमर्थेन विषयेणावि
शेष्यते अलमिति चेत् सम्भावनमिति पर्याप्तिमिति पर्याप्तिरलमर्थो न
भूषणादिरित्यर्थ, विपरिणामेनान्वय दर्शयति। 'तच्चेत्सम्भावनमिति'।
पर्याप्तिविषयत्वात् पर्याप्तम् अवितथविषयत्वात् अवितथम् एतद्धात्व-
र्थानुष्ठाने पर्याप्तो वितथारम्भोयमस्मिन् धात्वर्थ इत्येव रूप चेत्स
म्भावनमित्यर्थ । 'अपि पर्वत शिरसा भिन्द्यादिति' । एव नामाय
बलवानित्यर्थ, पर्वत तु भिनत्तु मावाभिदत् ॥

"विभाषा धातौ सम्भावनवचनेऽयदि" ॥ 'सम्भावयामि भुञ्जीत
भवानिति'। भोजने भवाश्शक्त इत्युत्प्रेक्ष इत्यर्थ ॥

"हेतुहेतुमतोर्लिङ्" ॥ 'भविष्यति च काल इति'। इष्यत इत्य

पेक्ष्यते कथ पुनरेतद् द्वय सूत्रेनुपात्तमेव लभ्यतइत्याह। 'तत्रेति'। 'ल डिति वर्त्तमाने इति'। उताप्योरित्यादे सूत्रात्। 'हन्तीति पलायत इति'। अत्र हनन हेतु पलायन हेतुमत्, वर्षण हेतु सरण हेतुमत् 'पलायत इति'। उपसर्गस्यायताविति लत्वम्, अत्र लक्षणहेत्वो क्रियाया इति शत्रादेशोपि न भवति इतियोगे च सद्विधिरिति व्यवस्थितविभाषासु पठितत्वात् ॥

'इच्छार्थेषु लिङ्लोटौ" 'कामप्रवेदनइति वक्तव्यमिति'। कामप्रवेदने कच्चितीत्यय तर्हि योग किमर्थ यावता कामो मे भुञ्जीत भवान् अभिलाषो मे भुञ्जीत भवानित्यत्राप्यनेनैव सिद्ध यत्रेच्छार्थमु पपद न भवति अर्थप्रकरणादिना तु कामप्रवेदन गम्यते तत्रापि लिङ् यथा स्यात्, इद तर्हि किमर्थ लोडर्थ लिङग्रहण तु लोटा बाधा मा भूदिति, एवमपि लोट्, चेति वक्तव्ये कि लिङ्ग्रहणेन प्रकृत लिङ्ग्रहण विभाषासम्बन्धमतस्तदनुकर्षणे विभाषाग्रहणस्याप्यनुकर्षण सम्भाव्येत ॥

"समानकर्तृकेषु तुमुन्" ॥ 'तुमुन्प्रकृत्यपेक्षमिति'। तुमुन्प्रकृतौ य कर्त्ता स चेदिच्छार्थेष्वपि भवतीति, एतच्च साचिध्याल्लभ्यते। 'इच्छति भोक्तुमिति'। आत्मनो भोजनमिच्छतीत्यर्थ, य एवेषे कर्त्ता स एव भुजेरपीत्यस्तीह समानकर्तृकत्वम् इच्छाया भुजिक्रिया प्रति तादर्थ्यस्या प्रतीतेस्तुमुन्ण्वुलावित्यादिना तुमुन् न सिद्ध्यतीत्ययमारम्भ, अथापि कथ चित्तादर्थ्य स्यादेवमपि समानकर्तृकेष्विति वक्ष्यामीत्ययमारम्भ, तेन देवदत्तेन भोक्तुमिच्छति यज्ञदत्त इति न भवति। 'इच्छन्करोतीति'। अत्रार्थे इच्छनकर्त्तुमिति न भवतीत्यर्थ, इच्छ कर्त्तु गच्छतीत्यादौ तुमुन् ण्वुलावित्यादिना तुमुन्, ननु भावे तुमुन् विधीयते तत्कथमिच्छन्करो तीत्यत्र कर्त्तरि प्रसङ्ग, एवमपीच्छता क्रियतइत्यत्र प्रसङ्गादनभिधान मेवाश्रयणीयम् ॥

"लिङ् च" ॥ किमर्थमिदमुच्यते लिङ् यथा स्यात्, सिद्धोत्र लिङ् इच्छार्थेषु लिङ्लोटाविति, तस्य समानकर्तृकेषु तुमुन् बाधक

प्राप्तो वासरूपविधिश्च क्ल्युट्तुमुन्खलर्थेषु प्रतिषिद्धस्तत्र यथा लोपन भवति एव लिङपि न स्यात्, अथापि वासरूपविधि स्यादेवमपि लिङेव यथा स्याल्लोपमाभूदित्येवमर्थमेतदारब्धव्यमेव ॥

"इच्छार्थेभ्यो विभाषा वर्तमाने" ॥ 'उश्यादिति' । वश कान्तौ अदादिर्ग्रहिज्यादिना सम्प्रसारणम् ॥

"विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" ॥ 'विधि प्रेरणमिति' । भृत्यादेर्निकृष्टस्य क्वचित्प्रवर्तनमाज्ञापनमित्यर्थ, नियोगतोऽवश्यम्भावेन यत्करणमनुष्ठान तन्निमन्त्रण स निमन्त्रणस्य विषय इत्यर्थ, अवश्यकर्त्तव्ये श्राद्धभोजनादौ दौहित्रादे प्रवर्त्तनेति यावत्, श्राद्धे हि निमन्त्रितो दौहित्रादिरभुञ्जान प्रत्यवैति ।'कामचारकरणमिति'। काम चार इच्छाप्रवृत्तिस्तया यत्करणमनुष्ठान तदामन्त्रण तद्विषयमामन्त्रणमित्यर्थ, यत्राननुष्ठानेपि न प्रत्यवायस्तत्र प्रवर्त्तनेति यावत् । कल्याणादौ ह्यामन्त्रितोऽभुञ्जानोपि न प्रत्यवैति । 'अधीष्टमिति' । अधिपूर्वादिच्छतेर्नपुसके भावे क्त, पुल्लिङ्गेन पाठस्त्वयुक्त । 'सत्कारपूर्वको व्यापार इति'। गुर्वादेराराध्यस्य व्यापारणेत्यर्थ, णयन्तादेरच्, इद वा कर्त्तव्यमिद वा कर्त्तव्यमित्येव भूतविचारणा सम्प्रधारण यथेदमिह सम्प्रधार्यतइति याज्ञा प्रसिद्धा ।

'न्यायव्युत्पादनार्थं च प्रपञ्चार्थमथापि वा ।
विध्यादिनामुपादान चतुर्णामादित कृतम् ॥
अस्ति प्रवर्तनारूपमनुस्यूत चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्य किं भेदस्य विवक्षया ॥

अथ विध्यादि प्रकृत्यर्थे प्रत्ययार्थे प्रकृत्यर्थविशेषण प्रत्ययार्थविशेषण वेति चत्वार पक्षा, तत्राद्ये पक्षे विध्यादिषु वर्त्तमानाद्धातोरित्यर्थ स्यात् ततश्च यत्र प्रकृतिरेव विध्यादीनाचष्टे तत्रैव स्यात् विदध्यान्निमन्त्रयेत आमन्त्रयेताऽधीच्छेत् सप्रच्छेत प्रार्थयेतेति, तत्रापि प्रकृत्यर्थो भाव कर्मकर्त्तारश्चेत्येतावदवगम्येत न प्रकृत्यर्थव्यतिरेकेणापरविध्यादिक, यथे-

च्छार्थेभ्यो विभाषा वर्त्तमानइत्यत्र लिङि इच्छेदिति लडादयश्च न स्युरनेन लिङा बाधितत्वात्, द्वितीये नाप्राप्तेषु भावकर्मकर्तृषु विध्याद योर्थो निर्दिश्यमानास्तेषा बाधका स्युरिति लिङा कर्त्रादीनामभिधान न स्यात्, द्विवचनबहुवचनानुपपत्तिश्च विध्यादीनामेकत्वात्, तृतीये तु यत्र प्रकृतिरेव विध्यादीनाचष्टे तत्र न स्यात् विदध्याच्निमन्त्रयेतेति नह्यत्र प्रकृत्यर्थादन्ये तद्विशेषणभूता विध्यादय सन्ति, चतुर्थे तु विध्यादीना कर्त्रादीना च स्पष्ट एव भेद इति दोषाभाव इति तमेवाश्रयति। 'विध्याद यश्चेत इति'। 'विध्यादिविशिष्टेष्विति'। विध्यादय प्रवर्त्तनाविशेषास्तै र्विशिष्टेषु प्रवर्तितेष्वित्यर्थ । सम्प्रश्नप्रार्थनयोस्तु सम्पृच्छ्यमाने प्रार्थ्यमाने च कर्त्तरि। ननु च प्रकृत्या योर्थो नाभिधीयते तत्रैव प्रत्ययेन भाव्य न तु प्रकृत्याभिहित, उक्तार्थानामप्रयोग इति न्यायात् ततश्चास्मिन्नपि पक्षे विदध्यादित्यादौ तदवस्थ एवाप्रसङ्ग, एव तर्हि सन्त्येवात्र व्यतिरिक्ता विध्यादयो विषयभेदात्, तथाहि। श्राद्धे मा निमन्त्रयेत भवानिति मत्कर्मक निमन्त्रण तवानुष्ठेयमित्यर्थ, तत्र प्रकृत्यभिहित निमन्त्रण भोजनविषय लिङभिहित तु निमन्त्रणविषयमिति विस्पष्ट एव निमन्त्र णभेद, यथैषितुमिच्छतीति कालसाधनभेदादिच्छयोर्भेदाश्रयो योगस्त द्वत्, एव विध्यादिष्वपि द्रष्टव्यम्, एव च कृत्वा प्रकृत्यर्थविशेषणपक्षेपि नातीव दोष । 'आमन्त्रण इह भवान् भुञ्जीतेति'। यदीच्छतीत्यर्थ, अधीयामह इत्यपपाठोय नहीच्छतेरेतद्रूप सम्भवति इष्यतिरपि परस्मै पदी गुणश्च श्यनि दुर्लभ इङश्चात्रार्थो नास्ति सूत्रे चाधीष्टेति इङ्‌ प्रयुक्तस्तस्मादधीच्छाम इति पाठ । 'उपनयेतेति'। आचार्यकरणआत्म नेपदम् ॥

"लोट् च" ॥ 'योगविभाग उत्तरार्थ इति'। उत्तरत्र लोट एवा-नुवृत्तिर्यथा स्याल्लिङो मा भूदिति। 'अध्ययै इति'। इट् उत्तमैकवचन, टेरेत्वम्, एत ऐ, आडुत्तमस्य पिच्चेत्याडागम., आटश्चेति वृद्धि, प्रकृतेर्गु-णायादेशौ ॥

"प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" ॥ 'कृत्य इति'। विभाषा

कृवृषोरिति क्यप्, भवान् हि प्रेषित इत्यादिर्वाक्यशेष सर्वेष्वेवोदाहरणेषु योज्य । 'न सामान्येनेति' । भावकर्मणोरित्युपलक्षण भव्यगेयादीना कर्त्तर्यपि भावात् । 'एव तर्हि तज्ज्ञापयतीति' । प्रैषादिष्वेव कृत्या भवन्ति नान्यत्रेति नियमार्थं चैतन्न भवति अनिष्टत्वात्, अन्यत्रापि कृत्या दृश्यन्ते, तृणेन शोष्य बुधेन बोध्यमिति अग्निस्तोक तृणेन दीपनीय इति, वस्तु स्वरूपकथनमेतत् न त्वत्र प्रैषादिप्रतीति । 'अधिकारात्परेणेति' । एनपा योगे पञ्चमी मृग्या । 'नावश्यमिति' । क्वचिद्भवति क्वचिन्नेत्यर्थ । 'को विशेष इति' । विधि प्रेरणमिति पूर्वत्र व्याख्यातत्वात् नास्त्येव भेद इति प्रश्न, यद्यविशेष कथ द्वन्द्वनिर्देश इति चेत् शब्दरूपस्याभिधेयत्वात्, को विशेष इति कोनयो शब्दयोर्विशेषोभिधेय इत्यर्थ । 'के चिदिति' । एवमामन्त्रणातिसर्गयोरपि विशेषो ज्ञेय, केचिदिति वचनादपरेनयोर्विशेष नेच्छन्तीत्युक्त भवति तेषामपि प्रैषातिसर्गग्रहण कर्त्तव्यमेव तत्रैव कृत्या यथा स्युरिति, प्राप्तकाले चेति ह्युक्ते निमन्त्रणादावपि कृत्या स्यु चकारेण लोडप्यनुकर्षणीय प्राप्तकाले यथा स्यादिति ॥

"लिङ् चोर्ध्वमौहूर्तिके" ॥ 'चकाराद्यथाप्राप्त चेति' । लोट् कृत्याश्च ॥

"स्मे लोट्" ॥ 'लिङ्कृत्यानामपवाद इति' । अनन्तरसूत्रेण प्राप्तानाम् । 'करोतु स्मेति' । स्मशब्दोधिकार सूचयति भवानत्राधिकृत इत्यर्थ ॥

"अधीष्टे च" ॥ 'अङ्ग स्म राजन्निति' । अङ्गशब्दोनुनये ब्राह्मणानामेवाध्यापन वृत्तिरतो राजन्नित्यभ्यर्हितेत्यर्थ ॥

"कालसमयवेलासु तुमुन्" ॥ 'प्रैषादिग्रहण सम्बद्ध्यतइति' । न चेह प्रैषादयो गम्यतइति भाव । 'इह कस्मादिति' । 'कालो भोजनस्येति' । तस्माद्भुङ्क्ता भवानिति वाक्यार्थस्तेन गम्यतेत्र प्रैष इति प्रश्न । 'वासरूपविधिनेति' । ननु प्रैषादिषु कृत्यविधानात् स्त्र्यधिकारात्परेण वासरूपविधिर्नास्तीति ज्ञापित तत्राह । 'उक्तमिति' । अनित्यत्वमेव तत्र ज्ञापित न सर्वथाभाव इत्यर्थ, पर्यायोपादान पर्यायान्तरनिवृत्त्यर्थम्, अन्ये त्वाहुर

वसरो भोक्तुमित्यादावपि तुमुन् दृश्यते व्युपयो शेतेरित्यत्र राजानमुप शयितु पर्याय इति प्रयुक्तो वृत्तिकारेण तस्मादर्थग्रहणार्थं पर्यायोपादान यथा निमित्तकारणहेतुष्वित्यत्रेति ॥

"लिङ् यदि" ॥ 'तुमुनोपवाद इति'। कर्तृकर्मणो सावकाशोपि लिङ् प्रतिपदविधेर्बलीयस्त्वात्परत्वाच्च भावे तुमुनो बाधक इत्यर्थ ॥

"अर्हे कृत्यतृचश्च" ॥ 'अर्हतीत्यर्ह इति'। पचाद्यच्। 'तद्योग्य इति'। तच्छब्देन धात्वर्थ परामृश्यते। 'अर्हे कर्त्तरि गम्यमानइति'। क्वचिद्वाच्ये क्वचिद्गम्यमान इत्युभयथानुग्रहाय गम्यमान इत्युक्त क्वचिद्वाच्ये गम्यमाने वेति पाठस्तत्र यथा सम्भवमित्यन्वयस्तत्र तृच् अजर्यकुप्यादिषु कृत्याश्च वाच्यत्वे भवन्ति लिङ् भव्यगेयादिषु कृत्याश्चोभयत्र भवन्ति, अथ कस्मात्कृत्यतृचाविति सूत्रे कृत्यभेदविवक्षया बहुवचनमिह तु सामा न्यविवक्षया द्विवचन, क्वचित्तु वृत्तावपि बहुचनमेव पठ्यते। 'तेन बाधा मा भूदिति'। वासरूपविधिश्च नावश्य भवतीत्यनन्तरमेवोक्तम् ॥

"आवश्यकाधमर्ण्ययोर्णिनि" ॥ 'अवश्य भाव आवश्यकमिति'। मनोज्ञादित्वाद् वुञ्, अव्ययाना भमात्रे टिलोप। 'उपाधिरिति'। प्रत्य यार्थविशेषणमित्यर्थ। 'नोपपदमिति'। शीतोष्णाभ्या कारिणि सेनान्त लक्षणकारिभ्यश्चेति निर्द्देशात् उपपदत्वे हि केवलाण्णिनिर्न स्यात् तत्साहचर्यादाधमर्ण्यमप्युपाधिरेव नोपपदम्। 'शत दायीति'। अकेनो र्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेधाद् द्वितीयैव भवति ॥

"कृत्याश्च" ॥ 'भव्यगेयादय कर्तृवाचका कृत्या इति'। भव्यगे यादिष्ववयत्वेन स्थिता कृत्या इत्यर्थ, आदिशब्देन न भव्यगेयादि सूत्र निर्द्दिष्टानामेव ग्रहण किं तर्ह्यजर्यकुप्यकृष्टपच्याव्यथ्यादीनामपि ग्रहण, योगविभाग उत्तरार्थं ॥

"शकि लिङ् च" ॥ 'प्रकृत्यर्थविशेषणमिति'। नोपपद तव्यजर्यौ शक्यार्थइति लिङ्गात्, उपपदत्वे हि केवलौ तव्यजर्यौ शक्यार्थे न सम्भ वत भवान्खलु शक्त इति वाक्यशेष सर्वेषु योज्य। 'लिङा बाधा मा भूदिति'। स्त्रिया परेण वासरूपविधेरनित्यत्वाल्लिङा बाधा शङ्का, परा

ञेरसोढ इत्यत्रासोढो योर्थे सोढु न शक्यतइति शक्यार्थे क्तप्रत्ययो व्याख्यात स कृत्यल्युटो बहुलमिति वा वासरूपविधिना वा समर्थनीय ॥

"आशिषि लिङ्लोटौ"॥ आशीर्विशिष्ट इत्याशास्यमान इत्यर्थ । विध्यादिसूत्र एवाशीर्ग्रहण न कृत स्मे लोडित्यादिविपर्येपि परत्वादेष विधिर्यथा स्यादिति अवश्य चोत्तरार्थमिहाशीर्ग्रहण कर्त्तव्यम् ॥

"क्तिच्क्तौ च सञ्ज्ञायाम्" ॥ 'तन्तिरिति'। अनुदात्तोपदेशेत्यादिनानुनासिकलोप प्राप्नोति अनुनासिकस्य क्विझलो क्ङितीति दीर्घत्व च तदुभयमपि न भवति न क्तिचि दीर्घश्चेति प्रतिषेधात्। 'सातिरिति'। सन क्तिचि लोपश्चास्यान्यतरस्यामित्यात्व, क्तिचश्चकारश्चिन्त्यप्रयोजनो न क्तिचि दीर्घश्चेत्यत्र एकानुबन्धकपरिभाषया क्तिनो निवृत्ते सिद्धत्वात् ॥

"स्मोत्तरे लङ् च" ॥ अत्रोत्तरशब्द आधिक्यवचनो न द्विवचनस्तेन पूर्वभूतेपि स्मशब्दे भवति तद्दर्शितम्। 'स्मशब्दसहित इति' ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां तृतीयस्याध्यायस्य तृतीय पाद ॥

"धातुसम्बन्धे प्रत्यया" ॥ प्रयोगे स्वार्थाभिधानव्यग्रयोर्धात्वो परस्परेण सम्बन्धाभावादुपचरितवृत्तिरत्र धातुशब्द इत्याह । धात्वर्थे धातुशब्द इति । 'धात्वर्थाना सम्बन्धो धातुसम्बन्ध इति'। सम्बन्धस्यानेकाधिष्ठानत्वात् वृत्तावपि सख्याविशेषोवगम्यत इति भाव । सकलविषयापेक्षया च बहुवचनम्, एकैक विवक्षाया तु धात्वर्थयो सम्बन्ध इति द्रष्टव्य, यदि तु कर्मत्व समानकर्तृकत्व च धातोरर्थद्वारक विशेषणमितिवद्धात्वोरेवार्थद्वारक सम्बन्ध आश्रीयेत इह तु न स्यात् गोमानासीत् गोमान् भवितेति द्वयोर्हि प्रयुज्यमानयो सम्बन्धो भवति न चात्र वर्तनकालेस्ति प्रयुज्यते कीदृश पुनरय धातुसम्बन्ध इत्याह । 'विशेषणविशेष्यभाव इति'। तत्र तिङन्तवाच्योर्थो विशेष्य तत्प्रधानत्वाद्वाक्यस्य

सुबन्तवाच्यस्तु विशेषणं कारकस्य क्रिया प्रति गुणभावात् । 'अयथाकालोक्ता अपीति' । यस्मिन्काले विहितास्ततोऽन्यत्रापि प्रयुक्ता इत्यर्थः, एतेन कालमात्रस्यात्र बाधो न तूपपदोपाधिप्रकृतिप्रत्ययार्थानामिति दर्शयति, एतच्च वर्त्तमानसामीप्यइत्यारभ्य प्रायेण कालान्यत्वप्रतिपादनाल्लभ्यते । 'अग्निष्टोमयाजीति भूतकाल इति' । भूत कालो यस्येति बहुव्रीहि, एतेन भविष्यत्काल इति व्याख्यातम् । 'तत्रेति' । तयोर्मध्ये भूतकालोऽग्निष्टोमयाजीत्येवशब्दो भविष्यत्कालेन जनितेत्यनेन सम्बद्ध्यमान साधुर्भवति अयमपि भविष्यत्काल सन्साधुर्भवतीत्यर्थः, अथ वा भविष्यत्कालेन स्वयमपि भविष्यत्कालेनाभिसम्बद्ध्यमान स्वकालपरित्यागेन भविष्यत्काल सन्नित्यर्थः, अय ह्यत्रार्थः पुत्रोऽस्य जनिता स चाग्निष्टोमेन यष्टेति तत्र यदि भूतकाल एव णिनिरवतिष्ठेत तदा यागस्य भविष्यत्तावगमो न प्राप्नोतीत्ययमारम्भ, एवमितरयोरप्युदाहरणयोर्द्रष्टव्यम्, अथ विपर्यय कस्मान्न भवति भविष्यत्कालो भूतकालेनाभिसम्बद्ध्यमान स्वकालपरित्यागेन भूते साधुर्भवति ततश्चाग्निष्टोमयाज्यस्य पुत्रो जात इत्ययवाक्यार्थ इति तत्राह । 'विशेषणं गुणत्वादिति' । प्रधानानुवर्त्ती गुणो न गुणानुवर्त्ति प्रधानमुभयोश्च स्वकालनिष्ठयो सम्बन्धानुपपत्तिरिति प्रधानानुरोधेन गुणस्य कालपरित्याग इत्यर्थः । 'प्रत्ययाधिकार इति' । यद्यपि प्रकृत प्रत्ययशब्द स्वरूपपदार्थकस्तथापीह सञ्ज्ञिनामनिर्देशात्सञ्ज्ञिपदार्थको विज्ञास्यत इति भाव । 'अधात्वधिकारविहिता अपीति' । अन्यथा प्रकृताना धातुप्रत्ययानामेव ग्रहणं स्यात् प्रत्ययग्रहणात्तु सर्वपरिग्रहार्थात्तद्धितानामपि कालान्तरेऽपि साधुत्व भवति । 'गोमानासीत् गोमान्भवितेति' । तदस्यास्त्यस्मिन्निति मतुप्प्रत्ययो वर्त्तमानसत्ताविशिष्टेन प्रकृत्यर्थेन विशिष्टेऽर्थे विहित' धातुसम्बन्धे तु प्रकृत्यर्थस्य भूतभविष्यत्त्वेऽपि साधुर्भवति ततश्चायमत्रार्थः गावोऽस्यासन् गोमानासीत् गावोऽस्य भवितारो गोमान् भवितेति । धात्वधिकारादेव धातुग्रहणे सिद्धे पुनर्धातुग्रहणं धातुविशेषपरिग्रहार्थं तेनास्तिभूजनिसम्बन्धे तद्विशेषणानामेव कालान्यत्वेन साधुत्व भवतीति केचित्, न चाय पक्षो भाष्ये सिद्धान्तत्वेन

स्यापित तस्मादविशेषेण भवतीत्यन्ये, दृश्यते चान्यत्रापि कालान्यत्व 'साटोपमुर्वीमनिश नदन्तो ये प्लावयिष्यन्ति सम ततोमी' इत्यत्र, नदन्त इति वर्त्तमानकाल प्लावयिष्यन्तीति अवर्त्तमानेनाभिसम्बद्धमानो भविष्यत्काल सम्पद्यते । सूत्रप्रत्याख्यान तु अग्निष्टोमयाजीति भूतएव णिनि जनितेत्येतत्सम्बन्धात्तु केवल व्यपदेशस्य भावित्वप्रतीतिरस्य सूत्रस्य शाटक वयेतिवत्, ततश्च भाविव्यपदेशविज्ञानाद्विशेषणस्य कालान्यत्व वाक्यार्थवशादसत्यपि सूत्रारम्भे प्रत्येष्यते, अवश्य च स्वकालएव प्रत्ययविधिरेष्टव्योऽन्यथा भाविकृत्यमासीदित्यत्र भाविशब्दस्य भूत कालत्वे भाव्यासीच्छब्दयो पर्यायत्वाद्युगपत्प्रयोगो न स्यात्, तस्मादिदानीमासीदित्येव तत्रार्थ, गोमानासीदित्यत्रापि देवदत्तस्य विद्यमानत्वेपि गोमद्रूपस्यातीतत्वाद् भूतप्रत्यय, तत्रार्थाद् गवामप्यतीतत्व प्रतीयते गोमच्छब्दस्तु स्वमहिम्ना वर्त्तमानसत्ताविशिष्टमेव प्रकृत्यर्थमाह ॥

"क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमो" ॥ 'धातुसम्बन्धइति वर्त्ततइति' । अनुप्रयोगधातुना च सबन्ध, क्वचित्त्वय ग्रन्थो न पठ्यते । 'प्रकृत्यर्थविशेषण चैतदिति' । उपपदत्वाशङ्का निरस्यति । व्याख्यानाच्चोपपदत्वाभाव । 'समभिहारविशिष्टक्रियावचनादिति' । क्रियाधर्मे समभिहारमात्रे धातोर्वृत्त्यसम्भवादेतदुक्तम्, अत्र यदि लोटो हिस्वाविति वचनात्तस्यैव हिस्वौ स्याता तदा सामान्यविहिताना तिङा शतृशानज्भ्यामिव हिस्वाभ्या बाधा स्यात्ततस्तध्वमोर्लोट्स्थानिकयोरभावाद्वा च तध्वमोरिति तयो स्थानित्वेनोपादानमनुपपन्नमिति लोट्शब्देन तदादेशाना ग्रहणमित्युपलक्ष्यते, अस्तु तथा को दोष, इह हि तिप्सिप्मिपा स्थाने विहितस्य हे स्थानिवद्भावेन पित्त्वान्ङित्त्वाभावाल्लुनीहीतीत्व न स्यात्, ब्रूहीति ब्रुव ईट् स्यात् तृण्ढीति तृणह इम् स्यात् अनुदात्तत्व च हे प्रसज्येत । नैष दोष । सेर्ह्यपिच्चेत्यत्र योगविभाग करिष्यते तत्सामर्थ्याद नन्तरस्य विधिर्वा भवति प्रतिषेधो वेति नाश्रीयते सेर्हिर्भवति अपिच्च भवति यावान्कश्चिद्धिर्नामेति, यो तर्ह्युत्तमादेशौ हिस्वौ तयोराडागम प्राप्नोति लुनीहिलुनीहीत्येवाह लुनामि अधीष्वाधीष्वेत्येवाहमधीयइति ।

नैष दोष । आटि कृते साट्कस्यादेशौ भविष्यत सकृत्प्रवृत्त्या लक्ष णस्य चरितार्थत्वात् हिस्वयो पुनराट् न भविष्यति, इह ह्याट् क्रियता हिस्वाविति सम्प्रधारणायामुभयो रनित्ययो शब्दान्तरस्य प्राप्नुवन्विधिर नित्यो भवतीति परत्वादाटि कृते साट्कस्य हिस्वाविति सिद्धमिष्टम्, एवमपि हेर्योगविभागेन पित्त्वाभावेपि स्वशब्दस्योत्तमादेशस्य पित्त्वाद्भुङ्क्ष्व भुङ्क्ष्वेत्येवाह भुञ्ज इत्यत्र श्नसोरल्लोप इत्यकारलोपो न प्राप्नोति, ब्रूष्व ब्रूष्वेत्येवाह ब्रुवे ब्रुव ईट् प्राप्नोति, सर्वेषा च तिडा द्वावपि हिस्वौ पर्यो येण स्याता न तु परस्मैपदाना हिरितरेषा स्व इति नियामकमस्ति तस्माद्दुष्ट एवाय पक्ष इति मत्वा लकारस्यैवादेशौ हिस्वावाश्रयणीयाविति दर्शयति । 'तस्य च लोट इति' । नन्वस्मिन्पक्षे वा च तध्वमोरित्यनुपपन्न मित्युक्त तत्राह । 'तध्वम्भाविनस्तु वा भवत इति' । मुख्यार्थासम्भवे तध्व भावी लोडेव तथोच्यत इत्यर्थ, यदि तर्हि लोट एव हिस्वावादेशौ न तदादेशाना ल परस्मैपदमिति द्वयोरपि परस्मैपदसज्ञा स्यात् ततश्च द्वावपि परस्मैपदिभ्य एव स्याता तिङ्त्वसन्निवेशाच्च तदन्तस्य तिङन्तता न स्यात् ततश्च तिङ्ङतिङ इति निघातो न प्राप्नोति हिस्वयोश्च कृत्वा त्तदन्तस्य शतृशानजन्तस्येव प्रातिपदिकत्वात्स्वाद्युत्पत्ति प्राप्नोति तत्र च विभक्तिसज्ञकहिस्वसदृशत्वादनयोर्हिस्वयोर्विभक्तिस्वरप्रतिरूपकाश्च निपाता निपातोऽव्ययमित्यव्ययसज्ञाया यद्यपि विभक्तीना श्रवण न भव ति तथापि तत परस्य तिङ्ङतिङ इति निघात प्राप्नोति द्वावपि च कर्तर्य्येव स्याता न तु स्वादेशो भावकर्मकर्तृषु स्यात् तस्मादयमपि पक्षो दुष्ट एव तत्राह । 'योगविभागश्चात्र कर्त्तव्य इति' । योगविभागे यथेष्ट सिद्ध्यति तथा दर्शयति । 'लोडित्येवेति' । एतेन द्वितीययोगे प्रथमान्तस्य लोड्ग्रहणस्यानुवृत्ति दर्शयति, तत्र च सामानाधिकरण्येन लोडित्यनेन हिस्वौ विशेष्येते न षष्ठ्याविपरिणामेन, न च हिस्वौ लोटौ भवत उच्यते चेद लोटौ हिस्वाविति ततश्च धर्मातिदेशो विज्ञायते तदाह । 'लोड्ध र्माणौ तौ भवत इत्यर्थ इति' । अत्र च लोट्शब्देन लोट्सबन्धिनौ हिस्वावु च्येते मुख्यलोट्सबन्धिनो धर्मस्यातिदेश्यस्यासम्भवात्प्रसिद्धौ लोट्सबन्धिनौ

यौ हिस्वौ सेर्ह्यपिच्च सवाभ्या वामाविति विहितौ तद्धर्मोणावित्यर्थ । कि सिद्ध भवति तद्दर्शयति । 'तेनेति' । तयोर्हि परस्मैपदात्मनेपदत्व भेदेन व्यवस्थित हे परस्मैपदत्व स्वस्यात्मनेपदत्वमिति अतस्तद्धर्मातिदेशादि हापि तदुभय भेदेन व्यवतिष्ठते, भेदेन भविष्यतीत्यर्थ । 'तिङ्त्व च भव तीति' । तथा च हीत्यस्य कर्त्ता वाच्य स्वशब्दस्य तु भावकर्मकर्त्तार पुरुषैकवचनसज्ञे तु विधानसामर्थ्याच्च भवत, यदि हि ते अपि स्याता हिस्वयोरनेन विधानमनुपपन्न स्याद् वचनान्तरेणैव तयोस्तादृशयो सिद्धत्वात् । 'लुनीहिलुनीहीत्यादि । 'पुन पुनर्लवनमय करोतीत्यादिरर्थ' । तत्र च लोडन्त पुन पुनर्लवनमाहानुप्रयोगधातुस्तु कृति तद्विषया वदन् अभिव्यनक्ति समुग्ध तद्गत साधनादिकम्, एव च सामान्यविशे षयोर्विशेषणविशेष्यभावाद् धातुसबन्ध उपपद्यते, इत्येवशब्दौ लोडन्तानु प्रयोगयो सबन्धार्थौ, अयन्त्वमहशब्दा पुरुषविशेषाभिव्यक्तिहेतव । 'अथ वेति' । वा च तद्धर्मोरित्यस्य फल दर्शयति । 'अलावीदिति' । लुङ् सिचि वृद्धि सिच इट्, तिपोस्तिसिचोपृक्तइतीट्, इट ईटीति सिचो लोप, सिज् लोप एकादेशे सिद्धो वक्तव्य इति सवर्णदीर्घत्वम् । 'एव मध्यमोत्तमयोरुदा हार्यमिति' । लुनीहिलुनीहीत्येव त्वमलावी अलाविष्टमलाविष्ट, अथ वा लुनीतलुनीतेत्येव यूयमलाविष्ट लुनीहिलुनीहीत्येवाहमलाविषम् अला विष्वालाविष्म । 'एव मध्यमोत्तमयोरपीति' । लुनीहिलुनीहीत्येव त्व लविष्यसि लविष्यथो लविष्यथ, अथ वा लुनीतलुनीतेत्येव यूय लविष्यथ लुनीहि लुनीहीत्येवाह लविष्यामि लविष्याव लविष्याम । 'एव सर्वेषु लकारेषूदाहार्यमिति' । लुनीहिलुनीहीत्येवायमलुनात् लुनातु लुनीयात् लूयात् लुलाव लविता लविष्यति अलविष्यत्, अधीष्वाधीष्वेत्येवमध्यैत अधीताम् अधीयीत अध्येषीष्ट अधिजगे अध्यगीष्ट अध्यैष्ट अध्येता अध्यैष्यत अध्यगीष्यत अध्येष्यते । कर्मणि लूयस्वलूयस्वेत्येवाय केदारो लूयतइत्यादि, भावे तु प्रसिद्ध स्वशब्दो दृष्टो न वेति चिन्त्यम् । अथोदाहरणेषु कथ द्विर्वचन यावता क्रियासमभिहार द्योतयितु द्विर्वचन विधीयते स चात्र तस्मिन्नेव विधीयमानेन लोटैव द्योतित, अथ द्योति-

तेपि तस्मिन्क्रियासमभिहारे द्वे भवत इति वचनसामर्थ्यादत्र द्विर्वचन यङन्तेपि प्राप्नोति वक्तव्यो वा विशेषस्तत्राह। 'क्रियासमभिहाराभिव्यक्ता विति'। ल कर्मणि चेति वचनाद्भावकर्मकर्त्तारोस्य वाच्या समभिहारस्तु द्विर्वचनेनैव द्योत्य, यङस्तु न किञ्चिदन्यद्वाच्य द्योत्य वा विद्यतइति तेनैव क्रियासमभिहारस्य द्योतितत्वाद् द्विर्वचनाभावः। ननु च सन्तु भावकर्म कर्त्तारोस्य वाच्या समभिहारोप्युपाधित्वेन श्रुत सोपि लोटो द्योत्यो भवतु यथा लडादिषु वर्त्तमानादय, एव तर्ह्यसति द्विर्वचने शुद्धस्य लो टोस्य च साधारण रूपमिति समभिहाराभिव्यक्तयेवश्य द्विर्वचनमपेक्ष्यते शब्दशक्तिवैचित्र्य चात्र हेतु, यथा स्त्रीत्व क्वचिदेकेनैव प्रत्ययेन द्योत्यते क्वचिद्वाभ्या क्वचित् दृषदित्यादौ प्रातिपदिकेनैवेत्यल प्रबन्धेन॥

"समुच्चये ऽन्यतरस्याम्"॥ समुच्चयइति समान्योक्तावपि क्रियासमुच्चयएव दृश्यते धातो प्रत्ययविधानादित्याह। 'अनेकक्रियाध्या हार समुच्चयइति'। अनेकासा क्रियाणामेकस्मिन् सबन्धिनि निचीयमा नतेत्यर्थ। एतेनैकक्रियाविषयात्समभिहारात्समुच्चयस्य भेदो दर्शित, धातो क्रियावाचित्वात्क्रियाधर्मे समुच्चयमात्रे वृत्तिर्न भवतीत्यभिप्राये णाह। 'समुच्चीयमानक्रियावचनादिति'। एकस्मिन्साधने या क्रिया समु च्चियन्ते तद्वाचिभ्यो धातुभ्य प्रत्यय इत्यर्थ। 'भ्राष्ट्रमटेत्यादि'। भ्राष्ट्राट नादीनि करोतीत्यर्थ। तत्रानुप्रयुज्यमानो धातु साधनभेदेन भिन्नेष्वटने ष्वनुवर्तमान कृतिव्यापार वदस्तद्गतानि साधनादीनि प्रकाशयतीति पर स्परसम्बन्ध, भ्राष्ट्र चुल्लि, खस्य दूर खदूरमपवरक, स्थाल्य प्रक्षालिता यत्र निधाय पिधीयन्ते तत्स्थाल्यपिधानम्। 'अथ वेति'। प्रथमेनाथवाशब्देन वा च तध्वमोरित्यस्य व्यापार दर्शयति द्वितीयेनान्यतरस्याङ्ग्रहणस्य, एव द्वितीयेप्युदाहरणे द्रष्टव्यम्॥

"यथाविध्यनुप्रयोग पूर्वस्मिन्"॥ 'यथाविधीति'। पदार्थानति वृत्तौ यथार्थे यदव्ययमित्यव्ययीभाव, अनुप्रयोग इत्यनुशब्दो धात्वर्थानु वादी न पश्चाद्भावेनानन्तर्यर्थे तेन पूर्वव्यवहितप्रयोगोपि भवति, पूर्व स्मिन्निति वचन विस्पष्टार्थे समुच्चये हि सामान्यवचनस्यानुप्रयोग

वक्ष्यति तेन ततोन्यत्राय विधिरन्यश्च विषय पूर्वमेव लोड्विधानम् । 'धातु सम्बन्धे प्रत्ययविधानादिति' । ननु च हिस्वान्तमेतदनभिव्यक्तपदार्थक सङ्ख्याकालपुरुषाणामनभिव्यक्तत्वात्, अतस्तदर्थाभिव्यक्त्यर्थमेवानुप्रयोग सिद्ध, अस्त्वेव किमेतावता वृत्तिकारोक्तो हेतुर्न भवति, अथ वा यावन्त मर्थमभिव्यक्तु हिस्वान्त समर्थ तावतो विवक्षायामनुप्रयोगासिद्धि मत्वै वमुक्तम् । 'यथाविध्यर्थं वचनमिति' । ननु च समुच्चये सामान्यवचनस्येति वक्ष्यति तत्र नियमो विज्ञास्यते समुच्चयएव धात्वन्तरस्यानुप्रयोग इति ततश्च क्रियासमभिहारे यथाविध्यनुयोगो भविष्यति, एव मन्यते समु च्चये सामान्यवचनस्यैवानुप्रयोग इति नियमादन्यत्र धात्वन्तरस्यापि स्यादिति छिनत्तीति नानुप्रयुज्यतइति, पचतीत्यादेर्भिन्नार्थस्य त्वप्रसङ्गो लोडन्तेनानन्वयात्, समानार्थस्य तु सम्भवति सम्बन्धो यथा तस्यैव, एव सामान्यवचनस्य करोत्यादेरप्यनुप्रयोगप्रसङ्ग, तस्यापि हि सन्निहितलोड न्तवाच्ये विशेषे पर्यवसानात्सम्भवत्येवान्वय । ननु चैकस्या आकृतेश्च रित प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भवति एतच्च कृञ्चानुप्रयुज्यत इत्यत्र व्याख्यात तत्र यथा गवा स्वामी अश्वेषु चेति न भवति तथेहापि येनैव धातुना लोट्प्रयोग प्रारब्धस्तेनैवासौ समापयिष्यते, न । अस्यापि न्यायस्य वेदे लोके च व्यभिचारात्, वेदे तावदिन्द्राय राज्ञे सूकर इति चतुर्थी प्रयोगप्रकरणे चित्रप्रश्येनस्य वर्त्तिका ते धातुरिति षष्ठी, मयु प्राजापत्य इति तद्धितश्च देवतासम्बन्धे दृश्यते, लोकेपि सक्तु पय पपुरिति लिटा प्रहानेनिजुरिति लङ् प्रयुक्त, तस्मादारभ्यमेवैतत् ॥

"समुच्चये सामान्यवचनस्य" ॥ ननु च हिस्वान्तस्यानभिव्यक्त पदार्थकत्वाद्धातुसम्बन्धे प्रत्ययविधानाच्चानुप्रयोग सिद्धो नार्थ एतेन तत्राह । 'सर्वविशेषेति' । असत्यस्मिन्यतो धातोर्लोड्विहित स तस्यानु प्रयुज्येत, एवमपि हिस्वान्तार्थस्याभिव्यक्तिर्भवत्येव धातुसबन्धश्चोपपद्यते, ननु च सर्वेषु विशेषेषु यदनुगत सामान्य तद्वाचिनोनुप्रयोगेपि तस्य सामान्यस्य सन्निहितेषु विशेषेषु पर्यवसानादर्थाभिव्यक्तिश्च सर्वेषा भवति धातुसबन्धश्च तत्र सामान्यवचनस्यैकस्यानुप्रयोगोस्तु बहूना विशेषवा

चिना वेति सम्प्रधारणायामेकस्यैव भविष्यति लघुत्वात्तत्राह । 'लाघव चेति' । अन्यथा तरुद्रुमादीनामेव प्रयोग स्याच्च वनस्पत्यादिशब्दाना मिति भाव । ननु भ्राष्ट्रमटेत्यादौ तस्यैवानुप्रयोगात्कथ सामान्यवचनता तत्राह । 'भ्राष्ट्रमटेत्यादि' । 'कारकभेदात् क्रियाभेदे सतीति' । भेद निबन्धन समुच्चयोऽप्येवमेवात्रोपपाद्य ॥

"छन्दसि लुङ्लङ्लिट" ॥ उदाहरणेषु धातुसम्बन्धो मृग्य । 'अकरदिति' । कृमृदृरुहिभ्यश्छन्दसीति च्लेरडादेश ऋदृशोऽडि गुण ॥

"लिडर्थे लेट्" ॥ 'जोषिषदिति' । जुषी प्रीतिसेवनयोरनुदात्तेत् व्यत्ययेन परस्मैपदम्, इतश्च लोप परस्मैपदेषु, लेटोऽडाटाविति तिपो ऽडागम, सिब्बहुल लेटीति सिप्, इडागम । 'तारिषदिति' । सिविधौ बहुल णिद्वद्भाव उक्तस्ततो वृद्धि । 'पतातीति' । पत्लृ गतौ, तिप आडागम ॥

"उपसवादाशङ्कयोश्च" ॥ यदि मे भवानित्यादिनोपसवादस्य स्वरूप दर्शयति। 'कारणात इत्यादिना'। शङ्काया अनुसरणमनुगमनमि त्यर्थ । 'अहमेवेत्यादि' । त्रिपुरविजये देवै प्रार्थितस्य देवस्यैतद्वचनम् । ईश ऐश्वर्ये, उत्तमैकवचनमिट्, टेरेत्व, वैतोऽन्यत्रेत्यैकार । पशवो द्विपा दश्चतुष्पादश्च वायु देवा अब्रुवन्सोम राजान हनामेति सोऽब्रवीद्वर वृणै मदग्रा एव वो ग्रहा गृह्यान्तादिति। मदग्रा मदाद्य प्रथम येषा ते तथोक्ता , ग्रहे कर्मण्यात्मनेपद यक् ग्रहिज्यादिना सम्प्रसारणम् झस्याडागम पूर्ववदै त्वम् । देवा सोममघ्नन्, सोऽपूयदशक्यतामागमत्, ते वायुमब्रुवन् इम न स्वदयेति, सोऽब्रवीद्वर वृणै मद्देवत्यान्येव व पात्राण्युच्यान्ता इति अह देवता येषा तानि तथोक्तानि, उच्यान्तादिति । वचेर्वचिस्वपीत्यादिना सम्प्रसारण शेष पूर्ववत्, 'नेज्जिह्मायन्त इति'। इच्छब्द आशङ्का द्योत यति । जिह्माचरणेन नरकपात सम्भाव्यते स मा भूदित्यर्थ, जिह्म कुटिल पाप छन्दसि परेच्छायामिति क्यच्, अश्वाघस्यादिति योगविभा गेनात्व, वृत्तौ तु वस्तुमात्र दर्शितम्। 'जिह्माचरणेनेति'। न पुनराचारे उपमानादन्यत्र क्यजस्ति, हेतौ शतृप्रत्यय । 'लिडर्थ एवायमिति'। हेतुहे

तुमद्भावे, कथम् उपसवादे तावत्करण हेतुर्द्दान हेतुमत् अन्यथा यदि मे भवानिद कुर्यादिति लिङ्क स्यात् विभाषा तु लिडिति अहमपि ते इद दास्यामीति लृट्, भाष्ये तु ,ददातेरपि लिङ् प्रयुक्त , आशङ्कापि कारणत कार्यानुसरण तत्र कारण हेतु कार्य हेतुमत्, अथापि करणमव धिर्दानमवधिमदित्यवध्यवधिमद्भाव उपसवादे प्रतीयते न हेतुहेतुमद्भाव , आशङ्कायामपि निश्चितो हेतुहेतुमद्भावो नास्तीत्युच्येत तथापि लिङ्प्र योगसिद्धयेवश्य वक्तव्योत्रहेतुहेतुमद्भाव , अतो लिडर्थ एवायमित्यर्थ । 'नित्यार्थं तु वचनमिति' । छन्दसि नित्योत्र लिङ् दृश्यतइति मन्यते, तथापि व्यवस्थितविभाषया सिद्धमिति चेत्तदेव तर्हि वचनेन ज्ञाप्यते ॥

"तुमर्थे सेसेनसेऽसे कसेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवे ङ्तवेन" ॥ 'कथ ज्ञायतइति' । कर्तरि कृदिति वचनात् भावस्तुमर्थो नोपपद्यतइति प्रश्न । अपकर्षापनय स्वार्थश्च धातूना भाव इति साध्य मानरूप स एव हि धातुवाच्यो भाव , घञादिवाच्यस्तु भावो धात्व र्थव्यतिरिक्त सिद्धतारूप । 'पिबध्याइति' । यको बहुल छन्दसीति लुकि पिबादेश । 'मादयध्याइति' । यक प्रसङ्गे व्यत्ययेन शप् ॥

"दृशे विख्ये च" ॥ योगविभागश्चिन्त्यप्रयोजन ॥

"ईश्वरे तोसुन्कसुनौ" ॥ 'वितृद इति' । ओतृदिर् हिसाना दरयो ॥

"कृत्यार्थे तवैकेन्केन्यत्वन" ॥ 'कृत्यानामर्थो भावकर्मणी इति' । यद्यपि भव्यगेयादिषु कर्त्ताप्यर्थ ब्रह्म करण स्नानीय चूर्णमित्यादिषु करणादयस्तथापि न तत्र कृत्यत्वेन कर्त्रादिषु विधान किं तर्हि स्वरूपेण, अत कृत्यतया विधान भावकर्मणोरेवेति भाव । 'दिदृक्षेण्य इति' । दृशे सन्नन्तात्केन्य । 'शुश्रूषेण्य इति' । शृणोते । 'सयादिसूत्रेपीति' । येन सयादयो विधीयन्ते तत्र तुमर्थे सेसेनसे इत्यत्रेत्यर्थ , । 'तस्य तु मर्थादन्यत्रेति' । अन्यथानेनैव तुमर्थे भावेपि सिद्धत्वादनर्थक तत्स्यात् ॥

"अवचक्षे च' ॥ 'एश्प्रत्यय इति' । शित्करण सार्वधातुक त्वार्थं तेन चक्षिङ ख्याञ् न भवति ॥

"भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्" ॥ सस्था नादीनामवधित्वेन लक्षणभाव । 'आ समाप्तेरिति' । सम्पूर्वो हि तिष्ठति समाप्तौ रूढ, सन्तिष्ठते पिण्डपितृयज्ञ इत्यादौ दर्शनात् । 'आतमितोरिति' । तमु ग्लानौ ॥

"अलखल्वो प्रतिषेधयो प्राचा क्त्वा" ॥ तुमर्थइत्येव । 'अल कृत्वेति'। अमैवाव्ययेनेति नियमादुपपदसमासाभाव । न कर्त्तव्यमित्यर्थ, 'वासरूप इति चेदिति'। पूर्वं तु प्रैषादिषु कृत्याना वचनेन स्त्र्यधिकारादूर्ध्वं वासरूपविधिर्नावश्यमस्तीति ज्ञापितत्वादिह तदभावमभिप्रेत्य प्राग्ग्रहण विकल्पार्थमित्युक्तम् ॥

"उदीचा माङो व्यतीहारे"॥ 'अपमित्येति'। मेङ् प्रणिदाने क्त्वो ल्यपि मयतेरिदन्यतरस्यामितीत्व, ह्रस्वस्य तुक् । 'अपूर्वकालत्वादिति'। पूर्वं ह्यसौ याचते पश्चादयमयते यदा चास्माद्वचनान्मयते क्त्वो भवति तदा समानकर्तृकयोरित्यादिना याचेर्न भवति अनेन बाधितत्वात्, यथा द्वितीयद्विर्वचनेन प्रथमद्विर्वचनम्, अनभिधानाद्वा । 'मेङ इत्यादि'। मेङोय कृतात्वस्य निर्द्देश कृतो न पुनर्माङ् मानइत्यस्य तस्य व्यतिहारे वृत्त्य-सम्भवादित्यर्थ, यद्येव मेङ इत्येव वक्तव्य तत्रायमप्यर्थो व्यतिहारग्रहण न कर्त्तव्य भवति तत्राह । 'ज्ञापनार्थमिति'। किं ज्ञाप्यतइत्याह । 'नानुबन्धकृतमिति'। प्रयोजनमाह । 'तेनेति'। यद्ययमर्थो न ज्ञाप्येत तत श्रूयमाणे पकारे दैप आत्व न स्यात् अनेजन्तत्वात् ततश्चादाब्विति प्रतिषेधे तस्य ग्रहण न स्याद्दाप लवनइत्यस्यैव तु स्यात् ॥

"परावरयोगे च" ॥ परावरशब्दयो सम्बन्धिशब्दत्वादन्यदपेक्ष परावरत्व तयो पूर्वपरयोरेव परावराभ्या योगो गम्यतइत्याह । 'परेण पूर्वस्येति'। पूर्वशब्देनात्रावरो विवक्षित । 'अप्राप्य नदीमिति'। नद्या पूर्वदेश इत्यर्थ । 'ततश्च नदी परा भवतीति'। परनदीयोगेन पर्वतो विशेष्यते । 'अतिक्रम्य पर्वतमिति'। पर्वतस्य परस्तादित्यर्थः । ततश्चावर पर्वतो भवति तेनावरपर्वतयोगेन नदी विशेष्यते, अयमप्यपूर्व-कालार्थ आरम्भ, अतिक्रमोऽत्र कीदृश इति चिन्त्यम् ॥

"समानकर्तृकयोः पूर्वकाले" ॥ क्रियापेक्षत्वात्कर्तृभावस्य धात्वधिकारेऽपि तदर्थस्यैव समानकर्तृकत्वं विज्ञायते न धातोरित्याह । 'समानः कर्त्ता ययोर्धात्वर्थयोरिति' । समानशब्दोऽयमेकवाची, तत्रेति निर्द्धारणे सप्तमीं दर्शयति, षष्ठ्यामपि न दोषः सप्तमीत्वाश्रिता । 'पूर्वकाले धात्वर्थे वर्त्तमानादिति' । प्राभाकरास्तु पूर्वप्रयुज्यमानादिति व्याचक्षते अनुष्ठाने पौर्वकाल्यं नाद्रियन्ते तद्भाष्यवार्त्तिकविरोधादुपेक्ष्यम् । उक्तं हि व्यादाय स्वपिति समील्य हसतीत्युपसंख्यानमपूर्वकालत्वादिति, ननु च शक्तिः कारकं सा च प्रतिक्रियं भिद्यते तत्कृतं समानकर्तृकत्वमित्यत आह । 'शक्तिशक्तिमतो रिति' । इह समानकर्तृकयोरिति द्विवचननिर्द्देशः क्रियते तेन द्वयोरेव पौर्वकाल्ये स्याद्बहूनां न स्यात्तत्राह । 'द्विवचनमतन्त्रमिति' । अवश्यं येन केन चिद्वचनेन निर्द्देशः कर्त्तव्यः, तत्र समानकर्तृकत्वस्य पूर्वकालत्वस्य च भेदाधिष्ठानत्वाद्भेदनिबन्धनयोर्द्विवचनबहुवचनयोः प्रथमभावित्वाद्द्विवचनं प्रयुक्तं न त्वेतत्तन्त्रमित्यर्थः, एवमपि लोकविज्ञानाच्च सिद्ध्यति तद्यथा लोके ऽमीषां ब्राह्मणानां पूर्वं आनीयतामित्युक्ते सर्वपूर्व एवानीयते एवमिहापि सर्वपूर्वाया क्रियाया प्राप्नोति तस्मादेव वक्तव्यं सर्वेषामेवात्र व्रजिं प्रति पौर्वकाल्यम् । 'स्नात्वा व्रजति भुक्त्वा व्रजति पीत्वा व्रजतीति' । आख्यातवाच्या हि क्रिया विशेष्यत्वात्प्रधानं तेन तां प्रति सर्वासां विशेषणत्वात्परस्परेणासम्बन्धः, तदुक्तं, गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादिति, एवं च क्त्वा प्रयोगोऽप्यनियतो भवति स्नात्वा भुक्त्वा पीत्वा व्रजति पीत्वा स्नात्वा भुक्त्वा व्रजतीति । 'भुक्तवति ब्राह्मणइति' । ननु तुमर्थाधिकाराद्भावे क्त्वाप्रत्ययः क्तवतुस्तु कर्त्तरि एव तद्धस्मिन्विषये भावे न भवतीति प्रत्युदाहरणत्वं वाच्यं, श्रीशैलशिखरं दृष्ट्वा सर्वपापैः प्रमुच्यतइत्येवमादीनां कर्तृभेदविषयाणां प्रयोगाणामसाधुत्वमेव । 'व्रजति जल्पति चेति' । यौगपद्यादिह पूर्वकालता नास्ति । 'अपूर्वकालत्वादिति' । पूर्वं ह्यसौ स्वपिति पश्चाद्व्याददाति यदेव हसति तदेव समीलयति न वा स्वप्नस्यापरकालत्वात् अवश्यं त्वसौ व्यादाय मुहूर्त्तमपि स्वपिति समील्य च हसति ततश्चोत्तरकालभाविस्वापहासाद्यपेक्षं पौर्वकाल्यं तदाश्रयश्च प्रत्ययः, इह

कस्मान्न भवति पूर्वं भुङ्क्ते ततो व्रजतीति स्वशब्देनोक्तत्वात्, विभाषाग्र इत्यनेनापि न भवति किं कारणं साधनपौर्वकाल्यविषयाणामग्रयादीनां तत्र ग्रहणमन्येभ्यो भोक्तृभ्य पूर्वं भुक्त्वा ततो व्रजतीति, इह तु व्रज्यपेक्ष भोजनस्य यत्पौर्वकाल्य तत्र क्त्वाप्रत्ययश्चोद्यते तत्पूर्वशब्देनोक्त, न च वच नसामर्थ्यादुक्तेपि प्रसङ्ग, साधनपौर्वकाल्यविषये ऽग्रयादावुपपदे चरितार्थ त्वात् क्रियाविषयत्वाच्च कालव्यवहारस्य तद्द्वारकमेव साधनपौर्वकाल्य द्रष्टव्यम, उक्त हि, क्रियाभेदाय कालस्तु सख्या सर्वस्य भेदिकेति, इहास्यते भोक्तुमिति वासरूपेण लड् भवति यदा ऽसे क्त्वा भवति तदा भुजेर्लडादय एव भवन्ति आसित्वा भुङ्क्त इति न तु तुमुन् अनभिधानात् आसित्वा भोक्तुमित्युक्ते प्रक्रमत इत्यादिना सम्बन्ध प्रतीयते ॥

"आभीक्ष्ण्ये णमुल् च" ॥ 'द्विर्वचनसहिताविति'। केन पुनरत्र द्विर्वचनमित्याह। आभीक्ष्ण्ये द्वे भवत इत्युपसङ्ख्यानाद् द्विर्वचनमिति'। नित्य वीप्सयोरित्यत्र तु वामनो वक्ष्यति तिङ्क्षु नित्यता अव्ययकृत्सु चेति तन्मते नित्यग्रहणादेवात्र द्विर्वचनम्। 'पायपायमिति'। आतो युक् ॥

"न यद्यनाकाङ्क्षे" ॥ 'अनाकाङ्क्ष इति'। यद्यद्यजन्तेन नञ्समास, तद्दर्शितम्। 'नापर किञ्चिदाकाङ्क्षत इति'। क्त्वा तु पूर्वसूत्रविहितो पीति'। णमुल् चेत्युक्त तदपेक्ष पूर्वत्वमपिशब्दादनन्तरसूत्रविहितोपि आभीक्ष्ण्येनाभीक्ष्ण्ये च क्त्वामात्रस्य प्रतिषेध इत्यर्थ.। एतच्च पूर्वकाले यत्प्राप्नोति तन्न भवतीत्येव प्रकरणापेक्षया प्रतिषेधविज्ञानाल्लभ्यते ॥

"विभाषाग्रेप्रथमपूर्वेषु" ॥ अग्रशब्दो देशविशेषवचनोप्यस्ति प्रभोरग्रे भुङ्क्त इति इह तु प्रथमशब्दसाहचर्यात्कालविशेषवाचिनो ग्रहणम्। अनुकरणत्वाच्चाग्रे इति विभक्तेर्लुगभावोऽस्य वामीयमिति यथा, 'आभीक्ष्ण्य इतिनानुवर्त्तत इति'। अप्राप्तविभाषेयमित्यत्रेय युक्ति', तदनु वृत्तौ हि पूर्वसूत्रेण प्राप्ते विभाषा स्याद् एव च ब्रुवता साधनपौर्वकाल्यविषया अग्रयादय इत्युक्त भवति, क्रियापौर्वकाल्ये हि अग्रयादिभिरेव तस्योक्तत्वादाभीक्ष्ण्येपि क्त्वाणमुलोरप्राप्तिरिन्याभीक्ष्ण्यइत्यनुवृत्तावप्यप्राप्तविभाषैव स्यात्, न च द्विर्वचनमन्तरेणाभीक्ष्ण्य द्योतयितु शक्यमिति

न तद्द्योतनायापि क्त्वाणमुलोर्विधानमुपपद्यते । नन्वननुवर्तमानेप्याभी क्ष्ण्यग्रहणे पूर्वसूत्रस्यावकाशो यत्राग्रयादयो न सन्ति अस्य तु यत्राभीक्ष्ण्यं नास्ति सोवकाश , आभीक्ष्ण्ये चाग्रयादिषु च सत्सूभयप्रसङ्गे परत्वादियमेव विभाषा प्राप्नोतीत्युभयत्र विभाषेय युक्ता, एव मन्यते पूर्वविप्रतिषेधेना भीक्ष्ण्ये नित्य एव विधिर्भवतीति, अग्रेभोजभोज व्रजति अग्रेभुक्त्वाभुक्त्वा व्रजति, एव पूर्वप्रथमयोरपि द्रष्टव्यम् । नन्वेव णमुल्यप्राप्ते क्त्वाप्रत्यये तु समानकर्तृकयोरित्यादिना प्राप्ते सत्ययमारम्भ इति पुनरप्युभयत्रविभा षेव युक्ता, नैतदस्ति, सह विहितौ यौ क्त्वाणमुलौ यद्विषये वास रूपविधेरभावो ज्ञापयितुमिष्टस्तावनन्तरसूत्रविहितौ क्त्वाणमुलावभिप्रे त्याप्राप्तविभाषेयमुच्यते न तु क्त्वाणमुल्मात्रापेक्षया । 'क्त्वाणमुलौ प्रत्ययौ भवत इति' । किमर्थं पुन क्त्वाविधीयते यावता नाभीक्ष्ण्येपि समानकर्तृकयोरित्येवासौ सिद्ध । सत्य, विभाषाग्रहणेन वासरूपविधेरभावो ज्ञाप्यतइति वक्ष्यति न च केवल णमुल्विधौ तदभावो ज्ञापयितुमिष्यते कि तर्हि क्त्वासहितणमुल्विधौ, तस्माण्णमुल क्त्वासहितस्य विधिर्यथा स्यादिति णमुल् चेत्यनुवृत्त्या क्त्वोप्यनुवाद क्रियते, एव हि द्वयो सह विधातुमुपादीयमान विभाषाग्रहण तादृश एव विषये वासरूपविधेरभाव ज्ञापयतीति सिद्धमिष्टम् । 'अग्रेभोज व्रजतीति' । अन्येभ्यो भोक्तृभ्य पूर्व भुक्त्वा व्रजतीत्यर्थ । 'आभीक्ष्ण्ये लडादयो न भवन्तीति' । अग्रे भुङ्क्ते भुङ्क्ते ततो व्रजतीत्येव न भवतीत्यर्थ । 'उपपदसमास कस्मान्न[1] भवतीति' । प्राप्तविभाषायामस्यामग्रयादीना पक्षे प्रत्ययनिवृत्तौ निमित्तत्व न तु प्रत्य योत्पत्तौ तयोराभीक्ष्ण्ये णमुल् चेत्यनेनाविशेषेण विहितत्वादित्यनुपप दत्वमप्राप्तविभाषाया त्वग्रयादीना प्रत्ययोत्पत्ति प्रति निमित्तत्वान्निमि त्तस्य चोपपदसञ्ज्ञाविधानादुपपदसमास "प्राप्नोतीति भाव । 'अमैव यत्तुल्यविधानमिति' । एतच्च तत्रैव व्याख्यातम् ॥

"कर्मण्याक्रोशे कृञ खमुञ्" ॥ उदाहरणेषु करोतिरुच्चारणे वर्तते तस्य शब्दात्मकमेव कर्म भवति तत्र चोरादिशब्दा शब्दप्रधाना

१ कस्माच्च क्रियते इति २ पु पाठ ।

चोरङ्कारं कोर्थं चोरशब्दमुच्चार्येत्यर्थस्तदाह । 'चोरोसीत्यादि'। 'चोरङ्करणमिति'। चोरशब्दोच्चारणम्। 'आक्रोशसम्पादनार्थमिति'। निन्दितशब्दोच्चारणमन्तरेण तस्य सम्पादयितुमशक्यत्वात्। 'न त्वसाविति'। न हि चोरोसीति वचनेन चोरः क्रियते ॥

"स्वादुमि णमुल्" ॥ 'स्वादुमीत्यर्थग्रहणमिति'। एतच्च व्याख्यानाल्लभ्यते। 'स्वाद्वर्थेष्विति'। मान्तत्वमपि सर्वेषां भवति अर्थे सम्भवात्, लवणसम्पन्नशब्दावपि स्वादुशब्दपर्यायौ। अथ स्वादुमीति मकारान्तनिपातनं किमर्थं यावता खमुञ् प्रकृतः सोनुवर्त्तिष्यते तत्रारुर्द्विषदजन्तस्य मुमिति मान्तत्वं सिद्धमिति तत्राह। 'मकारान्तनिपातनमीकाराभावार्थमिति'। भावप्रत्ययविषये मान्तत्वे निपात्यमाने वोतो गुणवचनादिति ङीन्न भवति मकारान्तत्वादुकारान्तत्वाभावादित्यर्थः। 'चव्यन्तस्येति'। खमुज्यपि न सर्वत्र मुम् सिद्ध्यति तद्विधावनव्ययस्येत्यधिकारादिति भावः। एवं तर्हि मान्तत्वमेव निपात्यतां प्रत्ययस्तु प्रकृतः खमुञेव विधेयः, नैतदस्ति, अव्ययार्थमेव मान्तनिपातनं स्यादिति ङीप्स्यादेव णमुलि तु मान्तत्वमपूर्वं विधीयमानमीकाराभावार्थं च च्व्यन्तस्य च मकारान्तार्थं विज्ञायते, अवश्यं चोत्तरत्र णमुल् विधेय इति लाघवाभावादिहैव कृतः। 'अस्वाद्वीं स्वाद्वीं कृत्वेति'। द्वयोर्वाक्ययोस्तन्त्रेणोपादानमेतत्, स्वाद्वीं कृत्वा यवागूं भुङ्क्ते इतीकाराभावस्योदाहरणम्, अस्वादु स्वादु भुङ्क्ते इत्यव्ययस्य, इह यदि क्त्वादयः प्रत्ययाः कर्त्तरि कृदितिवचनात्कर्त्तरि स्युः, इह पक्त्वौदनो भुज्यते देवदत्तेनेति देवदत्तात्तृतीया न स्यात् क्त्वाप्रत्ययेनाभिहितः कर्त्तेति, अथ क्त्वाप्रत्ययेनाभिधाने सत्यपि भुजिप्रत्ययेनानभिहितः कर्त्तेति कृत्वानभिहिताश्रया विभक्तिर्भवति तृतीया, यद्येवमोदने द्वितीया प्राप्नोति किं कारणं भुजिप्रत्ययेनाभिधानेपि क्त्वाप्रत्ययेनानभिहितं कर्मेति तथा यदि कर्मणि स्युः पक्त्वौदनं भुङ्क्ते देवदत्त इति देवदत्तात्तृतीया प्राप्नोति ओदनात्प्रथमा पक्त्वौदनो भुङ्क्ते देवदत्तेन पक्त्वौदनं भुङ्क्ते देवदत्त इत्येव तु भवति तथास्मिन् णमुल्यपि स्वादुङ्कारं भुज्यते यवागूर्देवदत्तेनेति यवाग्वा द्वितीया न भवति स्वादुङ्कारं यवागूं भुङ्क्ते देवदत्त इत्य

त्रापि कर्मणि द्वितीया भवति कर्त्तरि तृतीया च न भवति, एवमा तुमुनो द्रष्टव्य, तथा तुमुन्ण्वुलौ क्रियाया क्रियार्थाया समानकर्तृकेषु तुमुन्निन्य त्रापि तुमुनि भोक्तुमोदन पच्यते देवदत्तेन इष्यते ग्रामो गन्तु देवदत्तेन भोक्तुमोदन पचति देवदत्त ग्राम गन्तुमिच्छति देवदत्त इति सर्वत्रानुप्र योगाद्यत्र लादयस्तदनुरोधेनैव कर्तृकर्मणोर्विभक्तिर्भवति, तस्मादव्ययकृत समानाधिकरणाइति वक्तव्य, केन समानाधिकरणे, अनुप्रयोगेण, एतदुक्त भवति, अनुप्रयुज्यमानाद्धातोर्यस्मिन्कारके लादयो विहितास्तत्रैवाव्ययकृ-तोपि भवन्तीति, एव ह्युभाभ्या कर्तृकर्मणोरभिहितत्वाद्यथायथ विभ क्तय सिद्ध्यन्ति, वृत्तिकारस्त्विममर्थमन्यथा साधयितुमाह । 'तुमर्थाधिका राच्चेति । तत्र सयादिसूत्रे तुमर्थग्रहणात्तुमुन् भावे भवतीति ज्ञापित तदेव च तुमर्थग्रहण शकधृषज्ञेति यावदनुवर्त्तते ऽत सर्वएते क्त्वादयो भावे भवन्तीति तत्र चोदयति । 'यद्येवमिति' । 'तृतीया कस्मान्न भवतीति' । एतच्चोपलक्षण स्वादुङ्कार यवागूर्भुज्यते देवदत्तेनेत्यत्र कर्मणि द्वितीया कस्माच्च भवतीत्यपि द्रष्टव्यम्, अनभिहितइति पर्युदासे चैतच्चोद्य तदा हि सत्यभिधानेनभिधाने च यतानभिधान तदाश्रया विभक्ति प्राप्नोति, परिहरति । 'भुजिप्रत्ययेनेति' । अनभिहितइति प्रसज्यप्रतिषेध आश्रीयत इति भाव । तदा हि यतोभिधान तदाश्रय प्रतिषेधो भवति । ननु च शक्ति कारकमन्या च करणविषया शक्तिरन्या च भुजिविषया तत्र यद्ये कस्या शक्तेरभिधानमनभिधान च स्यात्स्यादय परिहार, यतोभिधान तदाश्रय प्रतिषेध इति शक्तिभेदात्त्वयुक्त इत्यत्राह । 'न चास्मिन्निति' । कि कारण भेदो न विवक्षित इत्याह । 'समानकर्तृकत्व हि विरुध्यत-इति' । ननु च मा नामास्मिन्प्रकरणे शक्तिभेदो विवक्षितोऽनभिहितइत्यत्र कस्मान्न विवक्ष्यते, असबद्धमेतत्, कथ हि तस्मिन्नेव प्रयोगे तदेव विवक्षा-विवक्षे स्याता, किञ्चानभिहितइत्येकत्वादीनामाधारनिर्द्देशो ऽनभिहिते कर्मादौ यदेकत्वादि तत्रेति द्रव्यमेव चैकत्वादीनामाधारो न शक्तिरतस्त त्रापि द्रव्यमेवानभिहितमित्युच्यते तस्य च शक्तिद्वारेणाभिधानानभिधा नयो सतोर्यतोभिधान तदाश्रय प्रतिषेधो भवतीति युक्तमेव । अभ्युपेत्यापि

शक्तिभेदविवक्षा परिहारमाह। 'प्रधानशक्त्यभिधाने चेति'। आख्यातपद वाच्या क्रिया विशेष्यत्वात्प्रधान विशेषणभूता त्वप्रधान तद्वारेण तद्विषययो शक्त्योरपि गुणप्रधानभाव, तत्र प्रधानानुवर्तित्वाद्गुणाना तन्मुखप्रेक्षित्वा त्तद्विरुद्धस्वकार्यारम्भाभावात् यथायथ विभक्तिसिद्धिरित्यर्थ । उक्त च

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययो पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुद्ध्यते ॥
प्रधानविषया शक्ति प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते ॥

इति । वय तु ब्रूम सकृच्छ्रुतस्य युगपदुभाभ्या सम्बन्धाभावादे केनैव प्रधानेन शाब्दोन्वय इति इतरेण तु सन्निधानादार्थ इति ॥

"अन्यथैवकथमित्थसु सिद्धाप्रयोगश्चेत्" ॥ 'कथ पुनरसौ सिद्धा प्रयोग इति'। सिद्ध ओदन इत्यादौ सिद्धशब्दो निष्पन्नवचन, ततश्च सिद्ध श्चेदप्रयोग कथमप्रयुज्यमानात्ततो णमुल्विधिरिति प्रश्न, सिद्धे सत्या रम्भो नियमार्थ इतिवत्प्राप्तवचन सिद्धशब्द इत्युत्तरम्। 'निरर्थकत्वादि ति'। निष्प्रयोजनत्वात्। 'एवमेवेति'। निरर्थक एव सन्नित्यर्थ । एतदेव स्फोरयति । 'अन्यथा भुङ्क्ते इति'। 'यावानर्थ इति'। उदाहरणेष्वनुप्र योगेषु या क्रिया तत्प्रकारवचना अत्रान्यथादय । 'अन्यथा कृत्वा शिरो भुङ्क्ते इति'। अत्र तु विना करोतिना शिरसोन्यथा करण न प्रतीयते भुजिक्रियागत एव प्रकारो गम्यते ऽतोवश्य प्रयोज्य करोति ॥

"यथातथयोरसूयाप्रतिवचने"॥'यद्यसूयन् पृच्छति प्रतिवक्तीति'। पृच्छति सति यद्यसूयन्प्रतिवक्तीत्यर्थ, असु मानसोपतापे कण्ड्वादि । 'तत्रेति'। एव भूते विषये यत्प्रतिवचन तदसूयाप्रतिवचनमित्यर्थ । यथा कारमिति'। प्रष्टुमनर्ह सन्यदि पृच्छति तदेदमुत्तरम्। 'यथा कृत्वाह भोक्ष्यइति'। तत्त्वकथनमेतत्। कथ पुनरत्र क्त्वाप्रत्ययो यावता सिद्धा प्रयोगइति वचनादनर्थकोत्र करोति, ततश्च भेदनिबन्धनस्य पौर्वकाल्यस्य समानकर्तृकत्वस्य चाभावान्नात्र प्राप्नोति, णमुल् पुनरुभयाभावेपि वचन

सामर्थ्याद्भवति, उच्यते, क्रियासामान्यवचन करोतिस्तद्विषयप्रकारो यथा तथाशब्दाभ्यामुच्यते तत्र सामान्यस्य सन्निहिते विशेषे पर्यवसानात्तद्विषय एव प्रकार उक्तो भवति ततश्च यथा भोक्ष्यतइति यावानर्थस्तावानेव सत्यपि करोतावित्येतावता सिद्धाप्रयोगत्वमुच्यते न पुनरत्यन्तमभिधेयाभावात्, ततश्च क्रियाभेदनिबन्धन उपपन्न एव क्त्वाप्रत्यय, एव च कृत्वा पूर्वसूत्रेपि वासरूपेण क्त्वा भवति, भाष्येपि तत्र तत्र प्रयुज्यते अन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहार उक्त, कथ कृत्वा बाधकमित्यादि ॥

"कर्मणि दृशिविदो साकल्ये" ॥ 'कर्मण्युपपदे साकल्यविशिष्ट इति' । सकलस्य भाव साकल्य तद्विशिष्टे कर्मण्युपपदइत्यर्थ । 'कन्यादर्शं वरयतीति' । अत्र दर्शनविषयभूताना सर्वासामेव कन्याना वाक्यार्थेनान्वयात्साकल्य, सर्वा कन्या वरयतीत्यत्रापि दर्शनविषयभूता इत्यर्थ, अतिशयप्रतिपादनपर चैतत्, यस्मात्कस्याश्चित्परित्यागेपि भवत्येव । 'जानाति लभते विचारयति वेति' । सत्तार्थस्य तु विदेरकर्मकत्वादग्रहणमिति भाव ॥

"यावति विन्दजीवो" ॥ विन्देति विदेर्लाभार्थस्यानुकरण तस्य हि विन्दतीत्यादौ शे मुचादीनामिति नुमस्ति । 'यावल्लभते तावद् भुङ्क्ते इत्यर्थ इति' । एतेनासाकल्य दर्शयति साकल्ये हि पूर्वेणैव सिद्धम् ॥

"चर्मोदरयो पूरे" ॥ कर्मणीत्यनुवृत्ते पूरेरिति ण्यन्तस्येद ग्रहणं केवलस्याकर्मकत्वादित्याह । 'पूरयतेरिति' । 'उदरपूर भुङ्क्तइति' । उदर पूरयन् भुङ्क्तइत्यर्थ । एवमादिषु प्रायेण पौर्वकाल्य नास्ति तस्मात्पूर्वकालइति न सम्बन्धनीयमित्याहु ॥

"वर्षप्रमाणऊलोपश्चास्यान्यतरस्याम्" ॥ गोष्पदपूरमिति' । गोपद पूरयन्वृष्ट इत्यर्थ, वृषेरकर्मकत्वात्कर्त्तरि क्त, अत्रापि पूर्वकालइति न सम्बन्धनीयमित्याहु । 'सीतापूरमिति' । सीता लाङ्गलपद्धति । 'अस्य ग्रहण किमर्थमिति' । सन्निधानादेव पूरयतेरूलोपो विज्ञास्यतइति

प्रश्न । 'उपपदस्य मा भूदिति'। अस्येत्यनुच्यमाने वर्षप्रमाणवदूलोपोपि समुदायविषयो विज्ञायेत प्रकृत्युपपदसमुदाये सन्निहितो य ऊकारस्तस्य लोप इति ततश्चोपपदस्यापि स्यादिति भाव । ऊलोपश्चास्यान्यतरस्यामिति शक्यमकर्तुं, कथ गोष्पदप्रमिति, प्रा पूरणादित्यस्माद्धातोरातोनुपसर्गे क क्रियाविशेषणत्वात्कर्मत्वनपुसकत्वे, न रूपभेदो नार्थभेदो न स्वरभेद कप्रत्यये थाथादिसूत्रेणान्तोदात्तत्व णमुल्यूलोपे कृते पूर्वस्य स्वरभाजोभावाल्लितीत्यस्याप्रवृत्तौ प्रत्ययस्वरस्तस्य कृदुत्तरपदप्रकृतिस्वरेणावस्थानमित्यन्तोदात्तत्वमेव, ननु च णमुलि सति कृन्मेजन्त इत्यव्ययत्वाद्विभक्तीना श्रवण न भवति तरपि च गोष्पदप्रतरमिति भवति, कल्पबादौ च गोष्पदप्रकल्प इति भवति, अज्ञातादिषु चाव्ययत्वादकज्भवति के तु सति सर्वमेतन्न सिद्ध्यति, उच्यते, इष्यते तावद्विभक्तीना श्रवणमेकेन गोष्पदप्रेणेति तरबादिषु चोपन्यस्तानि रूपाणि नेष्यन्तएव, एतच्च भाष्ये ऊलोपप्रत्याख्यानादवसीयते। ननु च गोष्पदपूरमित्याद्यपि घञैव सिद्ध न सिद्ध्यति यदि तावत्करणे घञ विधाय तदन्तेन कर्मणि षष्ठ्या समास क्रियते ततस्थाथा[illegible]स्वरेणान्तोदात्तत्व स्यादथ भावे घञि व्यधिकरणपदोबहुव्रीहि क्रियते गोष्पदस्य पूरणमस्मिन्वर्षइति तत पूर्वपद प्रकृतिस्वरप्रसङ्ग, गोष्पदपूरन्तरा गोष्पदपूरङ्कल्पमित्यादि न च सिद्ध्यति तस्माद्वर्षप्रमाण इति वक्तव्यम् ॥

"चेले क्नोपे" ॥ 'अस्माद्धातोर्ण्यन्तादिति'। पुका निर्देशादेव ण्यन्तत्वमवसीयते, व्याख्यानाच्चेल इत्यर्थग्रहणमित्याह। 'चेलार्थेष्विति'। 'चेलक्नोप वृष्ट इति'। चेल क्नोपयन् शब्द ययन्वृष्ट इत्यर्थ, यथा वर्षेण चेलानि शब्दायन्ते तथा वृष्ट इति यावत् ॥

"निमूलसमूलयो कष" ॥ अत्र प्रकरणे समानकर्तृकत्वमेव । 'निमूलकाषमिति'। कषतिर्हिंसार्थ । एकस्यैव धात्वर्थस्य सामान्यविशेषभावेन भेदे सति विशेषणविशेष्यभाव, निगत मूलमस्य निमूल, सह मूलेन समूल कषण करोति, सह मूलेन कषतीत्यर्थ । एव सर्वत्र प्रकरणे द्रष्टव्यम् ॥

"समूलाकृतजीवेषु हन्कृञ्ग्रहः" ॥ 'जीवग्राहमिति' । जीवतीति जीवः, इगुपधलक्षणः कः, जीवन्तं गृह्णातीत्यर्थः ॥

"करणे हनः" ॥ 'नित्यसमासार्थं चेति' । हिंसार्थानामित्यनेन णमुलि तृतीयाप्रभृतीन्यन्यतरस्यामिति विकल्पितः समासः स्यात् अतो हिंसार्थेप्यनेनैव णमुलेषितव्य इत्यर्थः । कथं पुनरिष्यमाणोपि लभ्यते, यावता ऽहिंसार्थे हन्तौ सावकाशोयं विधिर्हिंसार्थानामित्यस्य तु हन्तिव्यतिरिक्तो हिंसार्थो ऽवकाशः, हिंसार्थे हन्तावुभयप्रसङ्गे परत्वात्स एव विधिः प्राप्नोति तत्राह । 'पूर्वविप्रतिषेधेनेति' । कथं तर्हि हिंसार्थानामित्यत्रोदाहरिष्यते दण्डोपघातं गाः कालयति दण्डेनोपघातं वेति । अत्राहुः । यत्रैक एव धात्वर्थः सामान्यविशेषभावेन भिद्यमानो विशेषणविशेष्यभावमनुभवति सोस्य विषयः, कषादिषु यथाविध्यनुप्रयोग इति वचनात्, अत्यन्तभिन्नधात्वर्थसम्बन्धे तु तेनैव णमुल् भवतीति, एवं च नित्यसमासार्थो यथाविध्यनुप्रयोगार्थश्चेति, कोर्थः, यथाविध्यनुप्रयोगार्थः सन्नित्यसमासार्थ इत्यर्थः । इह द्विर्हन्ग्रहणं समूलग्रहणं च क्रियते सकृदेव तु शक्यं कर्तुं, कथम्, एवं वक्ष्यामि जीवाकृतयोर्ग्रहकृञः, शुष्कचूर्णरूक्षेषु पिषः, निमूले कषः, समूले हनश्च, चकारात्कषश्च, ततः करणे हन इत्येव, यद्येतत्कषादिषु यथाविध्यनुप्रयोग इति एतद्ग्रहादिष्विति वक्तव्यं, तथा तु न कृतमित्येव ॥

"स्नेहने पिषः" ॥ व्याख्यानात्स्नेहनद्रव्यार्थग्रहणमित्याह । 'स्नेहनवाचिनीति'। 'उदपेषमिति' । पेषंवासवाहनधिषु चेत्युदकस्योदभावः, शुष्कचूर्णेत्यत्र स्नेहनग्रहणं न कृतं कर्मणि तत्र प्रत्ययः इह तु करणे ॥

"हस्ते वर्त्तिग्रहोः" ॥ जीवे ग्रहः, हस्ते च, वर्त्तेश्चेति, नोक्तं तत्र कर्मोपपदमिह तु करणम् । 'वर्तिर्ण्यन्त इति' । निर्देश एवात्र प्रमाणम् । 'हस्तवर्त्तं वर्त्तयतीति' । हस्तेन वर्त्तयति गुलिकां करोतीत्यर्थः ॥

"स्वे पुषः" ॥ 'स्वपोषमिति' । 'पित्पर्यायवचनस्य चेति' । स्वरूपेपि भवति ॥

"सञ्ज्ञायाम्" ॥ अनधिकरणार्थोयमारम्भ, पूर्वयोगस्त्वसञ्ज्ञार्थ, कथ तर्हि ग्रामे बन्ध इति वासरूपविधिना घञ भविष्यति ॥

"कर्त्रोर्जीवपुरुषयोर्नशिवहो" ॥ 'जीवेन नष्ट इति'। जीवेन करणेनापद प्राप्त इत्यर्थ । 'पुरुषेणोढ इति'। पुरुषेण करणेन देशान्तर प्रापितो देवदत्तादिरित्यर्थ ॥

"ऊर्द्धे शुषिपूरो" ॥ 'ऊर्द्धशोष शुष्यतीति'। वृक्षादिरूर्द्ध एव तिष्ठन् शुष्यतीत्यर्थ । 'ऊर्द्ध पूर्यतइत्यर्थ इति'। ऊर्द्धमुख एव सन् घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थ ॥

"उपदशस्तृतीयायाम्" ॥ इत प्रभृति यौर्वकाल्यमप्यस्ति। 'मूलकोपदश भुङ्क्त इति'। ननु च नात्र तृतीयान्तस्योपदशिना सबन्ध, नहि मूलकेनान्य उपदश्यते कि तर्हि तदेवोपदश्यते, भुजिना तु सबन्ध उपपद्यते तम्प्रति करणत्वात् कि तूपदशिना सामर्थ्याभावात्प्रत्ययो न प्राप्नोति उपपदसञ्ज्ञा च न स्यात् तदभावादुपपदसमासोपि न प्राप्नोति, वचनस्य तु दशनैरुपदश्य भुङ्क्तइत्यादिरवकाश स्यादित्यत आह। 'मूलकादि चेति'। सत्य मूलकादेर्भुजिनैव शाब्दोन्वय उपदशिना तु कर्मापेक्षाया सन्निधानाद्योग्यत्वाच्च वस्तुत सबन्धोस्त्येव, भुजि प्रति करणत्वमन्यथा नोपपद्यते, ततश्चायमर्थ, मूलकेन भुङ्क्ते कि कृत्वोपदश्य, किमुपदश्य तदेव मूलकमिति, यदि तु यत्र तृतीयान्तेनैव शाब्दोन्वयस्तत्रैवाय प्रत्ययोभिमत, स्यात् करणइत्येव ब्रूयाद् यथा करणे हन इति, तस्मादार्थेन सबन्धेन सामर्थ्ये सति प्रत्ययादिक सर्व भविष्यति ॥

"हिंसार्थाना च समानकर्मकाणाम्" ॥ धातुसबन्धइत्यधिकारादनुप्रयोगधातुना समानकर्मत्व विज्ञायतइत्याह। 'अनुप्रयोगधातुना समानकर्मकाणामिति'। 'कालयति'। काल विक्षेपे चुरादि । 'दण्डताडमिति'। तड आघाते चुरादिरेव। 'उपहत्येति'। वा ल्यपीत्यनुनासिकलोप, ह्रस्वस्य तुक् ॥

"सप्तम्याञ्चोपपीडरुधकर्ष." ॥ 'उपशब्द प्रत्येकमिति'। पीडादीना समाहारद्वन्द्व कृत्वोपपूर्व पीडरुधकर्ष इत्युत्तरपदलोपी समास,

सौत्र पुल्लिङ्गनिर्द्देश, करणाधिकरणविवक्षाभेदेनोपपदेषु विभक्तिद्वयम् । कर्षतेरिति भौवादिकस्य न कृषतेरिति तौदादिकस्य शपा निर्द्देशात्, शपा निर्द्देशस्तु विहितगुणस्योच्चारणाद्विज्ञायते, सूत्रे तु पञ्चम्यर्थे प्रथमा, किञ्च स्याद्यदि तौदादिकस्य ग्रहणं स्यात् यावताभयोरपि विलेखना र्थत्वान्नार्थभेदो नापि रूपभेद, यद्यप्युभयोरपि विलेखने पाठस्तथापि तौदादिकस्य क्षेत्रविषये विलेखने वृत्ति पञ्चभिर्हलै कृषतीति, तेन क्षेत्रे उपकृष्य हलेनोपकृष्येति तौदादिकात्क्त्वाप्रत्यय एव भवति न णमुल् ॥

"समासत्तौ" ॥ 'सप्तम्या तृतीयायामित्यनुवर्त्ततइति' । पूर्वसूत्रेपि स्वरितत्वादेव तृतीयानुवर्त्तते सप्तम्या तु तस्या निवृत्तिर्मा विज्ञायीति चकार क्रियते, तेन चानुकृष्टमुत्तरत्र नानुवर्त्ततइति न चोदनीयम् । 'युद्धसरम्भादिति' । कोपादिना मन क्षोभपूर्वको वाक्कायविकार सरम्भ, युद्धार्थ सरम्भो युद्धसरम्भ, अश्वघासादिवत्षष्ठीसमास । 'अत्यन्त सन्निकृष्य युद्धन्तइत्यर्थ इति' । सन्निकर्षप्रतिपादनपरमेतत्क्लेशग्रहण भवतु मा वा भूदिति ॥

"प्रमाणे च" ॥ 'तृतीयासप्तम्योरित्येवेति' । अर्थानुवृत्तिप्रदर्शन मेतत्, नह्येवविध शब्द प्रकृतोस्ति । 'द्व्यङ्गुलोत्कर्षमिति' । द्वयोरङ्गुल्यो समाहारो द्व्यङ्गुल तत्पुरुषस्याङ्गुलेरित्यच् समासान्त, द्व्यङ्गुलेनोत्कृष्य परिच्छिद्येत्यर्थ, ह्रस्वा खण्डा खण्डिका ।

"अपादाने परीप्सायाम्" ॥ 'परीप्सा त्वरेति' । ञित्वरा सम्भ्रमे घटादि, घटादय षित, षित्त्वादङ् । 'शय्योत्थायमिति' । उद स्थास्तम्भोरिति तिष्ठतिसकारस्य तकार, पूर्ववद्युक् 'अवश्यकर्त्तव्यमपीति' । अक्षिप्रक्षालनादिकम् । 'द्वितीयाया परीप्सायामित्येवेति' । अनुदात्त पदमेकवर्जमित्यत्रापि परीप्सा भवत्येव, कथ परिभाषेय पदग्रहण च परिभाषार्थ तेनोदात्त स्वरितो वा यत्र विधीयते तत्र तत्समकालमेवैकमच वर्जयित्वा परिशिष्टमनुदात्त कर्त्तव्य न विलम्बितव्यमिति ॥

"स्वाङ्गे ध्रुवे" ॥ स्वाङ्गलक्षण चतुर्थे वक्ष्यते अद्रवन्मूर्त्तिमदित्यादि । 'अक्षिनिकाणमिति' । कण निमीलने चुरादिर्निपूर्व । 'उत्क्षिप्य शिर क

थयतीति'। ननु च ध्रुवमिति नित्यमुच्यते ध्रुवा द्यौर्ध्रुवा पृथिवीति यथा, अध्रुवमनित्यं शिरश्चाप्यनित्यमेव प्राणिनामेवानित्यत्वादत आह। 'यस्मिन्नङ्ग इति'। अय भाव । विशेषणसामर्थ्यात्प्रकर्ष आश्रीयते प्रकर्षेण यदध्रुवमिति, प्रकर्षश्च जीवत्यपि प्राणिनि कदा चिदभाव इति ॥

"परिक्लिश्यमानसिद्धौ च" ॥ 'परिक्लिश्यमान इति' । क्लिशु विबाधन इत्येतस्यैतद्रूप न तु क्लिश उपताप इत्यस्य, परिश्च सर्वतो भाव इत्याह । 'परिक्लेश सर्वतो विबाधनमिति' ॥

"विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयो " ॥ 'अनवयवेनेति' । साकल्येन । 'पदार्थानामिति' । गेहादीनाम् । 'तात्पर्यमिति' । पौन पुन्यमाभीक्ष्ण्यमित्यर्थ , द्रव्ये व्याप्तिरित्यादिना व्याप्त्यासेवयोर्विषयविभाग दर्शयति । 'गेहानुप्रवेशमिति' । ननु व्याप्तौ वीप्सा गम्यते आसेवाया च नित्यत्वमिति नित्यवीप्सयोरिति द्विर्वचन प्राप्नोति तत्कस्मान्न भवतीत्याह । 'समासेनेति' । यद्यपि समास एतयोरर्थयोर्न विधीयते तथापि स्वभावत एतयोस्तेनाभिधान यथा सप्तपर्ण इति, पर्वगताया वीप्साया पर्वणिपर्वणि सप्तपर्णान्यस्येति । 'तथा च वक्ष्यतीति' । नित्यवीप्सयोरित्यत्र वक्ष्यति भाष्यकार । 'तिङ्क्षु नित्यतेति' । उपलक्षणमव्ययकृत्सु चेत्यपि द्रष्टव्यम् । 'क्त्वानिवृत्त्यर्थमिति चेदिति' । आभीक्ष्ण्ये णमुल् चेत्यनेन क्त्वाणमुलौ द्वावपि विहितौ तत्र विश्यादिभ्यो णमुलेव यथा स्यात् क्त्वाप्रत्ययो मा भूदित्येवमर्थं पुनर्णमुलुच्यत इति चेदित्यर्थ । दूषयति । 'नेष्टत्वादिति'। इष्यते ह्यासेवाया विशिप्रभृतिभ्य क्त्वा गेहमनुप्रविश्यानुप्रविश्यास्त इति । 'द्वितीयोपपदार्थं तर्हीति' । अत्र हि द्वितीयाया चेत्यधिकाराद् द्वितीयान्तस्योपपदसज्ञा लभ्यते, किमर्थं पुनरुपपदत्वमिष्यत इत्याह । 'उपपदसमास इति' । तृतीयाप्रभृतीन्यन्यतरस्यामिति वचनात्पक्ष इत्युक्तम् । 'तेन हि सत्युपपदाभाव इति'। सप्तमीस्थस्य कस्य चिदभावात् ॥

"अस्यतितृषोः क्रियान्तरे कालेषु" ॥ असु क्षेपणे ञितृषा पिपासायाम् । 'क्रियामन्तरयतीति क्रियान्तर इति' । व्यवधानवाचिनोन्तरशब्दात्तत्करोतीति णिचि कर्मण्यण् । 'पाययतीति' । पिबतेर्णिचि शाच्छासाह्वेत्यादिना युक् । 'अत्यसनेनेत्यादि' । यच्चाद्य पान यच्च त्र्यहे गते भविता तन्मध्यवर्त्तित्वादत्यसनतर्षणयो,रेतदेव स्पष्टयन्नुदाहरणस्यार्थमाह । 'अद्य पाययित्वेत्यादि' । 'त्र्यहमुपोष्येति' । उपपूर्वाद्वसे क्त्वो ल्यप् यजादित्वात्सम्प्रसारण, शासिवसिघसीना चेति षत्व, मत्रोपवासेन भोजन व्यवधीयते । 'अहरिति' । कालाध्वनोरिति द्वितीया । कृत्स्नमहरिनत्यस्य क्षिप्त्वा गत इत्यर्थः । 'योजनमत्यस्येति' । क्व चित्स्थानादौ पाययित्वा ततो योजनमतिक्रम्य पाययतीत्यर्थः ॥

"नाम्न्यादिशिग्रहो" ॥ 'आदिशेर्ग्रहेश्चेति' । एतेनाङो दिशिनैव सम्बन्धो न ग्रहिणेति दर्शयति ॥

"अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ" ॥ अयथाभिप्रेताख्यानइति नञः प्रश्लेष पश्चान्निर्द्देशाद्विज्ञायते, अन्यथाऽसन्देहार्थं पूर्वं निर्द्दिशेत्, अयथाभिप्रेतशब्दश्चाख्यानक्रियाविशेषण, यथाभिप्रेत न भवति तथाख्यानइत्यर्थः, पुत्रजन्म प्रार्थयमान ब्राह्मण गत्वा केन चिद्गोपनीयवचोचैराख्यात ब्राह्मण पुत्रस्ते जात इति तमसूय्यमाणो ब्राह्मण आह । 'किं तर्हीति' । पुत्रजन्माख्यानस्य प्रियत्वेपि आख्यानप्रकारस्यानभिप्रेतत्वाद्भवत्युदाहरण,मत एवायथाभिप्रेताख्यानइत्युक्त न पुनरप्रियाख्यान इति । 'आचष्टइति' । लङ् ख्यासस्से शपो लुकि स्को संयोगाद्योरिति ककारलोप,, षढो कः सि, उदाहरणेऽयथाभिप्रेताख्यान दर्शयति । 'उच्चैर्नामेति' । नामशब्द प्रसिद्धो न पुनरिद ब्राह्मणवाक्यमुक्तमिति उपदशस्तृतीयायामित्यत्रेदमुक्तम् । 'समासार्थं वचनमिति' । एतदेवोपपादयति । 'तथाहीति' । क्त्वा चेत्यत्र तृतीयाप्रभृतीन्यन्यतरस्यामिति वर्त्तते तस्मादनेन य क्त्वा विहितस्तेनैव पक्षे समासो लभ्यते न तु समानादिसूत्रविहितेन, नहि तेन तृतीयाप्रभृतिषूपपदेषु क्त्वाविधीयतइत्यर्थः । णमुल्ग्रहणमनर्थकं प्रकृतो ह्यसौ तत्र क्त्वा चेति वक्तव्यमित्यत आह । 'णमुलधि

कार इत्यादि'। तुल्यकक्षत्व, तुल्यबलत्वम्। 'तेनेत्यादि'। यदि तु चकारेण यत्नेन णमुलनुकृष्येत उत्तरत्र नानुवर्त्तेत यत्नाभावात्, पुनर्णमुलग्रहणे तु द्वन्द्वनिर्दिष्टयोर्द्वयोरप्युत्तरत्रानुवृत्ति सिद्धा भवति ॥

"तिर्यच्यपवर्गे"॥ 'तिर्य्यक्कृत्येति'। तिरोऽञ्चतीति ऋत्विगित्यादिना क्विन्, तिरसस्तिर्यलोपइति तिर्यादेश, व्युत्पत्तिमात्र चैतन्न त्वत्रावयवार्थोऽस्ति समुदायो ह्ययमपवर्गे वर्त्तते तद्दर्शितम। 'समाप्य गत इत्यर्थ इति'। 'तिर्यक्कृत्वेति'। अनृजु कृत्वा ऽयत स्थित पार्श्वे स्थित्वेत्यर्थ, तिर्यचीत्ययुक्तोय निर्द्देश भसज्ञाया सत्यामच इत्यकारलोपे तिरश्चीति भवितव्यमत आह। 'तिर्यचीति'। 'शब्दानुकरणमेतदिति'। अच इत्यर्थवतोऽजित्यस्य ग्रहण स चार्थो लोकप्रसिद्धो गृह्यते, अभिव्यक्त पदार्था ये स्वतन्त्रा लोकविश्रुता इति न्यायात्, अतो ऽञ्चे स्वार्थे वर्तमानस्याल्लोप, एतत्तु तत्र स्थितस्य शब्दरूपस्यानुकरण तेनानुकार्येण रूपेणार्थवन्न तु लौकिकार्थेन तेन लोपाभाव इति भाव। नन्वेवमपि प्रकृतिवदनुकरण भवतीति लोप प्राप्नोत्येवात आह। 'न च प्रकृतिवदनुकरणेन भवितव्यमिति'। कस्मादित्याह। 'अनुक्रियमाणरूपविनाशप्रसङ्गादिति'। यादृश रूपमनुकर्त्तुमिष्ट तादृश न प्रतीयेत लौकिक एव त्वर्थ' प्रतीयेतेत्यर्थ, क्व च यथा प्रकृतिवदनुकरण न भवतीत्याह। 'एत दोशित्यादि'। यद्यनुक्रियमाणरूपविनाशेपि प्रकृतिवदनुकरण स्यादेतद अदस इत्यत्रोभयत्रापि त्यदाद्यत्वादिके प्रकृतिकार्ये सति एतस्यामुष्येति रूप स्यात्। ननु प्रयोजनानुवर्त्ति प्रमाण ततश्चेल्लोप प्राप्नोति कर्त्तव्य एवाय कथ यत्तदेतेभ्य इति त्यदाद्यत्व,मस्य वामीयमिति यस्येति लोप, गवित्ययमाहेत्यवादेश' पटिति करोतीत्यनुक्रियमाणरूपविनाशे सत्यप्यव्यक्तानुकरणस्यात इताविति पररूपत्व वा भवति तस्मादुभयथा निर्द्देशदर्शनात्क्वचित्प्रकृतिवदनुकरण भवति क्वचिन्नेति वाच्य तथा चास्मिन्नेव सूत्रे भाष्य सौत्रो निर्द्देश इति ॥

"स्वाङ्गे तस्प्रत्यये कृभ्वो"॥ तस्प्रत्ययइति बहुव्रीहिनिर्द्देश इत्याह। 'तस्प्रत्ययो यत स्वाङ्गात्तदेवमुच्यत इति'। न च क्विन्प्रत्ययस्य

कुरितिवत्कदा चित्तस्प्रत्ययान्तत्वेन दृष्टे सप्रत्यतदन्तेपि स्वाङ्गे प्रसङ्ग, तस्प्रत्ययग्रहणसामर्थ्यात् कर्मधारये वाय तस्प्रत्यये परतो यत्स्वाङ्ग त स्मिन्नुपपदइति, वृत्ती तु वस्तुमात्र प्रदर्शितम्। 'यथासख्यमत्र नेष्यत इति'। व्याख्यानात्। 'मुखत इति'। आद्यादित्वात्सप्तम्यर्थे तसि। 'मुखे तस्यतीत्यादि'। ननु उपत्तय इत्यस्मान्मुखशब्दउपपदे अन्येभ्योपि दृश्यतइति क्विप्, मुखत, अत्वसन्तस्य चेति दीर्घो न भवत्यधातो रिति प्रतिषेधात्, प्रत्ययाप्रत्ययपरिभाषयैवात्राप्रसङ्गात् नार्थ प्रत्ययग्रह णेन॥

"नाधार्थप्रत्यये च्व्यर्थे"॥ 'नार्थो धार्थश्चेति'। नाधासहचरितोर्थो नाधाशब्दाभ्यामुक्त, नार्थो यस्य स नार्थ नार्थार्थ इत्यर्थ, एतेन धार्थो व्याख्यात। 'प्रत्ययो यस्मादिति'। यदि पञ्चम्या विग्रह क्रियते तत प्रकृ तेरुपलक्षण नाधार्थग्रहण स्यादिति सम्प्रत्यतदन्तत्वेपि प्रकृतिमात्रे प्रसङ्ग, न प्रसङ्ग, एव हि विनञ्भ्याम्सङ्ख्यास्विति वक्तव्य स्यात्, षष्ठ्या विग्रह कर्त्तव्य नाधार्थ प्रत्ययो यस्य समुदायस्यावयव इति, ल्यब्लोपे वा पञ्चमी व्याख्येया, य समुदायमुद्दिश्य नाधार्थे प्रत्ययो विधीयतइति। 'विनाकृत्य नानाकृत्येति'। विनञ्भ्या नानाञौ नसहेति नानाञौ। द्विधाकृत्येति'। सङ्ख्याया विधार्थे धा। 'द्वैधकृत्येति'। द्वित्र्योश्च धमुञ्। हिरुक्पृथक्शब्दौ विनार्थे। 'नाना कृत्वा काष्ठानि गत इति'। पूर्वमेव नाना सन्ति काष्ठान्य न्यत्र कृत्वा गत इत्यर्थ। 'धार्थमर्थग्रहणमिति'। बहवो हि धार्था प्रत्य यास्तत्रासत्यर्थग्रहणे प्रत्ययस्यैव ग्रहण स्यान्नान्येषा तदर्थानामर्थग्रहणे तु तेषामपि भवति यश्चाधादेशो धार्थे धमुञन्तात्स्वार्थे डदर्शनमिति तदर्थ मर्थग्रहण द्वैधकृत्य द्वैधकार द्वैधभूय द्वैधभावमिति धमुञादीना तु स्थानि वद्भावादेव सिद्ध तद्धितो ध इत्यधिकारेणादेशपक्षस्याश्रयणात्, अथ नार्थ मप्यर्थग्रहण कस्मान्न भवतीत्यत आह। 'ना पुनरेक एवेति'। ननु च नाप्रत्य यावपि द्वौ भवतो निरनुबन्धक सानुबन्धकश्चेति तत्रासत्यर्थग्रहणे निर नुबन्धकस्यैव ग्रहण स्यान्नेतरस्य, एव मन्यते तन्त्रावृत्त्येकशेषाणामन्यतम स्याश्रयणात्तस्यापि भविष्यति॥

"अन्वच्यानुलोम्ये" ॥ 'अन्वग्भूयेति'। अग्रतः पार्श्वतः पृष्ठतो वाऽनुकूलो भूत्वास्त इत्यर्थः । 'अन्वग्भूत्वेति'। पृष्ठतो भूत्वेत्यर्थः । अनुकूलोऽननुकूल इति शब्देन न स्पृश्यते ॥

"शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्" ॥ अत्रानन्तरेणास्तिशब्देनैव।र्थशब्दः सम्बद्ध्यते शकधृषज्ञाग्ला घटार्हयोश्च पृथगुपादानात्तदाह। 'शकादिषूपपदेषु अस्त्यर्थेषु चेति'। 'तुमुन् प्रत्ययो भवतीति'। भावे। 'अक्रियार्थोपपदार्थ आरम्भ इति'। क्रियार्थोपपदे तुमुन्ण्वुलावित्यादिनैव सिद्धत्वात्, तत्र तावत् शक्नोति भोक्तुं धृष्णोति जानातीति भोजने प्रावीण्यं गम्यते। 'ग्लायति भोक्तुमिति'। तत्राशक्तिः, घटते ऽर्हतीति योग्यता, आरभते प्रक्रमत इति भुजेरेवाद्यावस्था। 'लभते भोक्तुमिति'। अप्रत्याख्यातं भोजनं लभत इत्यर्थः । 'उत्सहते भोक्तुमिति'। भोजने व्याप्रियत इत्यर्थः । 'अस्ति भोक्तुमिति'। भोजनमस्तीत्यर्थः । प्रवीणो भोक्तुं कुशलो भोक्तुं पटुर्भोक्तुमित्यादौ पर्याप्तिविवक्षायामुत्तरसूत्रेण तुमुन् भवति ॥

"पर्याप्तिवचनेष्वलमर्थेषु" ॥ 'पर्याप्तिरन्यूनता'। परिपूर्णतेत्यर्थः । अन्यूनता च द्विधा सम्भवति भोजनस्य प्रभूततया वा भोक्तुः समर्थतया वा, ऽत सामर्थ्येनालमर्थेन विशिनष्टि। 'अलमर्थेषु पर्याप्तिवचनेष्विति'। 'पर्याप्तो भोक्तुमिति'। भोजने न न्यूनीभवति समर्थ इत्यर्थः । 'पर्याप्तमिति'। प्रभूतमित्यर्थः । 'शक्यमेव कर्त्तुमिति'। सुकरमेतदित्यर्थः । सम्भवमात्रं वा ऽत्र विवक्षितं सम्भवत्येव विधस्य करणमिति ॥

"कर्त्तरि कृत्" ॥ किमर्थमिदमुच्यते, कर्त्तरि कृद्वचनमनादेशे स्वार्थविज्ञानात्, यत्र वचनेनार्थो निर्दिश्यते तत्र प्रत्यासत्त्या प्रकृत्यर्थएव प्रत्ययो भवति तद्यथा गुप्तिकिद्भ्यः सन्, यावादिभ्यः कनिति एवमिमे कृतः स्वार्थे स्युः स्वार्थे मा भूवन् कर्त्तरि स्युरिति। ननु च यमिच्छति स्वार्थे आह तं भावे घञ् भवतीति तन्नियमार्थं भविष्यति घञेव भावे नान्यः कृदिति, असति ह्येतस्मिन्सूत्रे घञित्येतावत्सूत्रं कर्त्तव्यं धातोर्घञ् भवतीति, तत्रानिर्दिष्टार्थत्वाद्भावएव घञ् भविष्यतीति, ततः पचत्यादि-

श इति द्वितीय सूत्र कर्त्तव्य, ततश्च भावइति न कर्त्तव्य, क्रियमाण तु नियमार्थं भविष्यति घञेव भावे नान्य कृदिति, ततश्चान्य कृद्वात्वर्थां चिप्तं कर्त्तरि भविष्यति। स्यादेतत्। कर्मादीनामपि धात्वर्थनात्तिपात्तेष्वपि कृत स्युरिति, न। ध कर्मणि ष्ट्रन्, करणाधिकरणयोल्युट्, दाशगोघ्नौ सम्प्रदाने, भीमादयोपादाने, इत्यत्र ष्ट्रनेव कर्मणि नान्य इत्यादिको नियमो विज्ञास्यते, यद्योक्त कर्मादि नियत प्रत्ययास्त्वनियता इति कारकान्तरेपि ष्ट्रनादय स्यु, नैष दोष। एकमिद वाक्य ध कर्मणि ष्ट्रनिति तेन च कर्मणि विधीयमान कथ कारकान्तरेपि स्यात्, द्वितीयोपि वा नियमो विज्ञास्यते कर्मण्येव ष्ट्रन्निति, एव सर्वत्र, य इदानीमतोन्य प्रत्यय. शेष सोन्तरेणापि वचन कर्त्तर्येव भविष्यति कर्त्तरि भुव खिष्णुच्खुकञौ कर्त्तरि चर्षिदेवतयोरित्युभयत्रापि करणनिवृत्त्यर्थो कर्तृश्रुतिर्विज्ञ्यैवेति खिष्णुजादिषु कर्तृनियमो न भविष्यति, तदेव तर्हि प्रयोजन स्वार्थे मा भूवन्निति, ननु चोक्त भावइति नियमो विज्ञास्यतइति स्वार्थादन्य स भावो धात्वर्थस्य सिद्धता नाम शुद्धे स्वार्थे कृत स्यु, ल कर्मणि च भावे चेत्यय तर्हि नियमो भविष्यति ल एव भावे इति, नाय नियम शक्यो विज्ञातु कर्तृकर्मणोर्निर्देशेन निर्दिष्टार्थत्वात् लकारा स्वार्थे न स्यु, अकर्मकेभ्य इति च वक्ष्यामीत्येवमर्थमेतत्स्यात्, अत सुष्टूक्त कर्त्तरि कृद्वचनमनादेशे स्वार्थविज्ञानादिति। अत्र च द्वैधम् एतद्वाक्यनिरपेक्षै स्वैर्विधायकैर्वाक्यैर्विहिताना कृता पश्चादेनेनार्थे आदिश्येत कृदुत्पत्तिवाक्याना वाय शेष स्यात् ण्वुल्तृचौ कर्त्तरि नन्दिग्रहिपचादिभ्यो ल्यु णिन्यच' कर्त्तरीति, तत्राद्ये पक्षे यथानेन तृजादीनामर्थे आदिश्यते तथा ल्युनादीनामप्यादिश्येत विशेषानुपादानात् ततश्चैतेष्वनेन कर्त्तरि च स्यु स्वेषुस्वेषु विधिवाक्येषु करणादीनामप्युपादानात्करणादिषु च, ननु च ल्युनादिषु करणादिरर्थो विशेषविहितत्वात् कर्त्तुश्च बाधको भविष्यति, न। नानावाक्यत्वात्, इह दधि ब्राह्मणेभ्यो दीयता तक्र कौण्डिन्यायेति अभिन्नकालत्वादेक वाक्य विशिष्टदानस्य प्रतिपादकमिति तक्रेण दधि बाध्यते यदा तु पूर्वाह्णे ब्राह्मणभोजनप्रकरणे दधि ब्राह्मणेभ्यो दीयता

मित्युच्यते ऽपराह्णे तु तक्र कौण्डिन्याय दीयतामिति न तदा बाध्यबाध कभाव, तथास्मिन्पक्षेपि कालभेदेन वाक्यद्वयोच्चारणाद्बाध्यबाधकभावो न लभ्यते तस्माद्दुष्ट एवाय पक्ष इति द्वितीय पक्षमाश्रित्याह । 'कृद्ग्रहणमत्त्रिवाक्यानामय शेष स्यादिति'। प्रागुक्तो दोषस्तदवस्थ एव तत्राह । 'येष्वित्यादि'। कुत एतदित्याह । 'अर्थाकाङ्क्षत्वादिति'। येषु वाक्ये ष्वर्थो न निर्दिश्यते तान्यर्थाकाङ्क्षीणि । तथाहि । ण्वुल्तृचौ भवत इत्यु क्तेर्थविषया आकाङ्क्षा जायते क्वैतौ भवत इति, कर्त्तरि कृदित्यस्याकाङ्क्षा भवति क्व कृत् कर्त्तरि भवतीति, अतस्तृजादिविध्यनुपस्याने शेषशेषिणोरु भयोरप्याकाङ्क्षापूर्यते ततस्तत्रैवोपतिष्ठतइत्यर्थ । 'ल्युनादिवाक्येष्विति'। उपतिष्ठतइत्यनुषङ्ग, कारणमाह । 'साक्षादर्थनिर्देशे सति तेषा निरा काङ्क्षत्वादिति'। न च रक्तपटन्यायेनाकाङ्क्षोत्थापनेनोपस्थान युज्यते स्वत एव साकाङ्क्षे तृजादिविध्यनुपस्थानेन शेषस्यापि चरितार्थत्व तु, रक्त पटो भवतीत्यत्र तु पटो भवतीत्यस्य निराकाङ्क्षत्वेपि रक्तपदार्थस्य साकाङ्क्ष त्वादाकाङ्क्षोत्थापनेनान्वय, न च विदेशस्थाना कथमेकवाक्यत्वमिति वाच्य, शास्त्रे विदेशस्थानामप्यवान्तरवाक्यानामाकाङ्क्षावशादेकवाक्यत्व दर्शनात्, यथा द्वितीयेध्याये लुगुच्यते तस्य चतुर्थषष्ठयोरलुगपवादो गोत्रे लुगचि, अलुगुत्तरपदइति ॥

'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा" ॥ 'भव्य इति'। अचो यत्, गुण, वान्तो यि प्रत्ययइति वान्तादेश । 'गेयो माणवक साम्नामिति'। एतेन कै गै शब्दइत्यस्येद निपातन न गाङ् गतावित्यस्येति दर्शयति, एतच्च निपातनाल्लभ्यते, ईद्यतीतीत्वम्। 'जन्य इति'। अचो यदित्यत्र तकिशसिचतियतिजनीनामुपसङ्ख्यानमिति वच नाद्यत्। 'आप्लाव्य इति'। ओरावश्यके। 'आपात्य इति'। ऋहलोर्ण्यत् ॥

"ल कर्मणि च भावे चाकर्मकेभ्य " ॥ ल इति लड्लटोरकारा नुबन्धयो सामान्येन ग्रहणमेकवचन चेति शङ्कामपाकरोति । 'ल इत्यु त्सृष्टानुबन्धसामान्यमेक गृह्यतइति'। 'प्रथमाबहुवचन चैतदिति'। सा मान्यस्यैकत्वेपि जात्याख्यायामेकस्मिन् बहुवचनम् । अथादेशापेक्षया षष्ठी

कवचन कस्मान्नाश्रीयते ल लस्य य आदेश इति, यथा ल परस्मैपदमिति, उच्यते। एव विज्ञायमाने लादेशानामनेनार्थो निर्दिश्येत ततश्चाम्विषयस्य लकारस्यार्थो न निर्दिष्ट स्यात्, लुगत्रादेश, न चाभावरूपस्य तस्यार्थो देशन युज्यते ततश्चासौ कर्त्तरि कृदिति कर्त्तर्य्येव स्यात्। ननु च तस्याम इति लुकापहारे सत्यनुप्रयोगे ये लादेशास्तैरेव भावादीनामभिव्यक्तिर्भ विष्यति, नैतदस्ति, यदा ह्याम्विषयो लकार कर्त्तर्येवेति स्थित तदा विरोधाद्भावकर्मवाचिप्रत्ययपरोऽनुप्रयोगो नैव प्राप्नोति श्रुतस्यैव च सबन्धो पपत्तावादेश इत्यध्याहारो न युक्त, तस्मात्प्रथमाबहुवचनान्तमेव युक्त, तत्र द्विविधो लकारस्तिङ्भाव्यतिङ्भावी च, तत्र तिङ्भाविन कृत्सज्ञा निषेधात्कर्त्तरि कृदित्यस्यानुपस्थानात्स्वार्थे भावे विधान प्राप्नोति, अति ङ्भाविनस्तु कर्त्तरि कृदिति वचनात्कर्त्तर्येव साधुत्व प्राप्नोति न भावक र्मणो, आस्यमान शय्यमानमित्यादाविति वचनमिदमारभ्यते। ननु च भावकर्मणोरात्मनेपद विधीयते शेषात्कर्त्तरि परस्मैपद ततश्च लकारस्य भावकर्मकर्त्तारोऽर्था अनुमास्यन्ते, यद्वा लकारस्य प्रयोगेऽसमवायादादेशा-नामेव ते ऽर्था भविष्यन्ति नार्थ एतेनेत्याशङ्क्याह। 'सकर्मकेभ्यो भावे न भवन्तीति'। अनारभ्यमाणएतस्मिन्यथा भावे विधीयमाना घञादय स कर्मकेभ्योपि भावे भवन्ति ओदनस्य पाक सूत्रस्य कृतिरिति तथा भाव कर्मणोरित्यनेन भावआत्मनेपद सकर्मकेभ्योपि स्यात् ततश्च पच्यते यवागू देवदत्तेनेति प्रयोग प्राप्नोति, अतो भावे चाकर्मकेभ्य इति वक्ष्या मीत्ययमारब्ध, अथ तत्रैव भावकर्मणोरकर्मकादित्युच्यते तत्राकर्मकग्रहणं कर्तव्य स्यात्, ननु चेहापि क्रियते, इहावश्य कर्तव्य तयोरेव कृत्यक्तख लर्था भावे चाकर्मकेभ्य इति, तस्मात्सकर्मकेभ्यो भावे मा भूदित्येवम र्थमयमारम्भ इति स्थित, कि चाम्विषयस्य लकारस्यार्थादेशनार्थम पीद वक्तव्यम्। इतरथा पूर्वोक्तदोषप्रसङ्गादित्यलमियता॥

"तयोरेव कृत्यक्तखलर्था"॥ 'तयोर्भावकर्मणोरिति'। पूर्वसूत्रे साक्षाच्छ्रुतयोर्भावकर्मणोस्तच्छब्देन परामर्शो न चकारेण सनिधापितस्य कर्त्तुरिति भाव। अत एवोत्तरसूत्रे पुन कर्त्तरि चेत्युक्त, यदि ह्यनन्तरवाक्ये

चकारेण सनिधापितस्य कर्त्तुर्भावस्य चात्र प्रत्यवमर्शः स्यात् तत्र कर्तृग्रहणमनर्थकं स्यात् कर्त्तर्यनेनैव सिद्धत्वात्। 'एवकार इत्यादि'। कृत्त्वात्कर्त्तरि कृत्या प्राप्ता एवकारेण कर्त्तुरपकृष्यन्ते व्यावर्त्यन्ते। ननु च तक्रकौण्डिन्यन्यायेन न कर्त्तुरपकर्षो भविष्यति, यथा वडवाया वृषे वाच्य इत्यत्र वक्ष्यते ऽपत्ये प्राप्तस्ततोपकृष्य वृषे विधीयते ऽपत्ये त्वणेव भवतीति, सत्य, न्यायप्राप्त एवार्थ एवकारेणानूद्यते। 'शयितमिति'। निष्ठाशीङ्स्विदिमिदिक्ष्विदिधृष इत्यकित्त्वाद्गुणो भवति। 'भावे चाकर्मकेभ्यइति वर्त्तत इति'। वय तु ब्रूम एवकार कर्त्तुरपकर्षणाय न कर्त्तव्य इत्युक्त तस्यात्रोपयोग, ययोर्भावकर्मणोर्लकार उक्तस्तयोरेवान्यूनानतिरिक्तयो कृत्या दयो भवन्तीति, यदि च सकर्मकेभ्यो भावे स्युस्तयोस्तादृशयोरेव तु न कृता स्युरिति॥

"आदिकर्मणि क्त कर्त्तरि च"॥ 'आदिकर्मणीति'। कर्मधारय, कर्मशब्दश्च क्रियावचन इत्याह। 'आदिभूत क्रियाक्षण आदिकर्मेति'। साधनकर्म तु न गृह्यते आदिशब्देन विशेषणात्, बहूना समवाये आदिमध्यान्तभाव, साधनकर्मत्वे किमिति कि तत्रादिशब्देन। 'तस्मिन्नादिकर्मणि भूतत्वेन विवक्षितइति'। एतेन निष्ठेत्यनेनैवादिकर्मणि क्त सिद्धो न पुनरादिकर्मणि निष्ठा वक्तव्येति दर्शयति, आद्ये हि क्रियाक्षणे भूते समूहरूपारोपादेकदेशे समूहे चेति न्यायाद्वा धात्वर्थ एव भूतो भवतीति युक्त एव क्त। 'प्रकृत कट देवदत्त इति'। प्रारब्धवानित्यर्थ। 'प्रकृत देवदत्तेनेति'। अत्र कर्मणोऽविवक्षितत्वेन धातोरकर्मकत्वाद्भावएव क्त। एव प्रभुक्त देवदत्तेनेत्यत्रापि॥

"गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च"॥ 'अनूषित इति'। वसतिक्षुधोरिट्, अनुप्राप्य जातोनुजात, एवमनुजीर्णः, सकर्मकेभ्य कर्माविवक्षाया भावे क्त॥

"दाशगोघ्नौ सम्प्रदाने"॥ 'गोघ्न इति'। अत्र दानपूर्वके हनने हन्तिर्वर्त्तते। 'अर्घार्ह इति'। अर्घो मधुपर्क्क तदङ्गत्वेन गोहनन विहि-

तम् । एतावद्गोरालम्भनस्थानमतिथि पितरो विवाहश्चेति, यदि सम्प्रदाने गोघ्न इति निपात्यते चाण्डालादेरपि तेनाभिधानं प्राप्नोति, अस्माअपि ह्यागताय गा दातुमर्हन्ति सुहृदादयोत आह । 'निपातनसामर्थ्यादिति' । 'असत्यपि चेति' । यथा ऽपचन्नपि योग्यतया पाचक इत्युच्यते तथेहापीत्यर्थः ॥

"भीमादयो ऽपादाने" ॥ 'उणादिप्रत्ययान्ता एतइति' । बाहुल्यावेतदुक्तं प्रस्कन्दनप्रपतनयोरप्यौणादिकत्वात् । 'ताभ्यामन्यत्रोणादय इति पर्युदासे प्राप्तइति' । यद्यप्यसत्यस्मिन्सूत्रेऽपादानस्य प्रकृतत्वात्ताभ्यामिति निर्द्देशो नोपपद्यते तथाप्ययमर्थस्तावत्तत्र वक्तव्यस्ततोपादानाच्चान्यत्रोणादय इति, ततश्च स्यादेव पर्युदास इत्यर्थः ॥

"ताभ्यामन्यत्रोणादयः" ॥ ननु चान्यत्रोणादय इत्यप्युक्ते प्रकृतत्वादेव ताभ्यामन्यत्रेति विज्ञास्यते ऽत आह । 'सम्प्रदानार्थ इति' । कृषित इत्यादिना कर्मणि वृत्तिं दर्शयति, अत्रेडागमश्चिन्त्यः, एवं तनित इत्यत्रापि, के चिदाहुः । यस्य विभाषेतीट्प्रतिषेधो ऽनित्यः, कृतिनृत्योरीदित्करणात्, तद्धि श्वीदितो निष्ठायामितीट्प्रतिषेधार्थं क्रियते तत्र सेसिचिकृतीति विभाषितेट्त्वादेव यस्य विभाषेतीट्प्रतिषेधो भविष्यतीति किमीदित्करणेन । अपर आह, चुरादावदन्तौ कृषितनी पठितव्याविति ॥

'क्तोधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः" ॥ 'स्वनिकायप्रसिद्धिरिति' । यथा यूपचषालादयो याज्ञिकानामेव प्रसिद्धास्तथा वैयाकरणाना निकायएषा प्रसिद्धि, निघण्टुषु तु अभ्यवहारपर्यायतया प्रत्यवसानशब्दस्य पाठो वैयाकरणप्रसिद्धिमूलः । 'इदमेषामासितमिति' । अधिकरणवाचिनश्चेति षष्ठी । 'कथमित्यादि' । कर्त्तरि निष्ठा मन्यमानस्य प्रश्नः । 'अकारो मत्वर्थीय इति' । अर्शआदेराकृतिगणत्वादच् प्रत्यय इत्यर्थः । इह द्विर्गत्यर्थाकर्मकग्रहणं च क्तग्रहणं च क्रियते सकृदेव तु शक्यं कर्तुं, कथम्, एवं वक्ष्यामि क्तोधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः, ततो

गत्यर्थाकर्मकेभ्य कर्त्तरि च, चकाराद्धिकरणे च, अनुवृत्ताच्चकाराद्यथा प्राप्त च, तत श्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च, कर्त्तरीत्येव, एते भ्यश्च कर्त्तरि क्तो भवति चकाराद्यथाप्राप्त च, अधिग्रहणग्रहणात्तु नात्रा नुवर्त्तते योगविभागकरणसामर्थ्यात्, तत आदिकर्मणि च, आदिकर्मणि च कर्त्तरि क्तो भवति चकाराद्यथाप्राप्त च, ततो दाशगोघ्नावित्यादि, तथा तु न कृतमित्येव ॥

"लस्य" ॥ 'अकार उच्चारणार्थ इति'। नानुबन्ध , अन्यथा लड्ल टोरेव ग्रहण स्यात् ततश्च परस्मैपदाना णलादय लोटो लड्वत् एरुरि त्यादिक यविधानमनुपपन्न स्यात्, लिड्लोटोस्तिबादीनामभावात्। 'लका रमात्र स्थानित्वेनाधिक्रियतइति'। ननु चेत्सञ्ज्ञाया लोप प्राप्नोति वच नसामर्थ्यात्सत्यामपीत्सञ्ज्ञाया लोपो न भविष्यति, एवमपि लित्स्वर प्राप्नोति, णलो लित्करण ज्ञापक न लादेशेषु लित्स्वरो भवतीति। 'किञ्चे दमिति'। लकारमात्रस्य ग्रहण प्राप्नोतीति मन्यमानस्य प्रश्न । धात्वधिका रोनुवर्त्ततइति वक्ष्यमाणाभिप्रायेणाह। 'दश लकारा इति'। अक्षरसमाम्नाये यथानुपूर्व्या ऽकारादय तदानुपूर्वीविशिष्टैरकारादिभिरनुबन्धै कथ्यन्ते न तु विधानक्रमेणेत्यर्थ । 'लकारमात्रस्य ग्रहण कस्मान्न प्राप्नोतीति'। विशेषानुपादानात्प्राप्नोत्येवेति भाव । वर्णग्रहणेषु चार्थवद्ग्रहणपरिभाषा न प्रवर्त्तते तथा च यस्येति लोपोनर्थकस्यापि भवति दैवदत्तिरिति, अकुर्वं श्चत्रेति यणादेश । 'धात्वधिकारोनुवर्त्ततइति'। धातुग्रहणमनुवर्त्तत इत्यर्थ ,एवमप्यग्निचिल्लुनाति, अत्रापि प्राप्नोति विहितविशेषणधातुग्रहण, मेवमपि शामामलिभ्यो ल औणादिक शाला माला मल्ल , अत्रापि प्राप्नोति, उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि तथापि परिहारान्तरमाह । 'क र्त्रादय इति'। ल कर्मणि चेत्यत्र निर्दिष्टा अर्था कर्तृकर्मभावा इहानु वर्तन्ते, तैश्च लकारो विशेष्यते, कर्त्रादिषु विहितस्य लस्येति, तेन विशि ष्टविषयस्यैव लस्य ग्रहण न सर्वस्य ॥

"तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिम हिङ्" ॥ तिबादीना समाहारद्वन्द्व । 'पकार स्वरार्थ इति'। प्रदर्शन

मेतत्सार्वधातुकमपिदित्याद्यपि प्रयोजनम्। 'इटष्टकार इत्यादि'। ननु चेटोदित्यत्र लिडित्यनुवर्तते तेनेकारस्य त्वविधानेपि नास्त्यतिप्रसङ्ग, एवमपि तिबाद्यवयवस्य प्राप्नोति, यथा एरुरित्येतल्लोट इत्यनुवृत्तावपि तिबाद्यवयवस्य भवति, नहि तत्रावयवषष्ठी लिड इति तु स्थान षष्ठीत्यत्र प्रमाणमस्ति, अथाद्यन्तौ टकिताविति देशविध्यर्थष्टकार कस्मान्न भवतीत्याह। 'तिबादिभिरित्यादि'। तुल्यत्व सदृशत्व तच्चैक योगनिर्दिष्टत्वेन, लस्येत्येका षष्ठी तत्र तिबादय सप्तदशादेशा स्थाने योग प्रयोजयन्ति तानेको नोत्सहते विहन्तुमित्यर्थ। 'महिङो ङकार इत्यादि'। तिङित्युपलक्षण तङित्यपि प्रत्याहारो भवति, चिनुमहइत्यादौ तु गुणप्रतिषेधार्थो न भवति सार्वधातुकमपिदित्यनेनैव सिद्धत्वात्, यत्र ह्यार्द्धधातुकमेषिषिमहीति तत्र ङित्त्वार्थ कस्मान्न भवति, प्रत्याहारे चरितार्थस्य समुदायानुबन्धस्यावयवानुबन्धत्वे प्रामाणाभावात्, तृनि कथ, तस्यापि हि नकारो नलोकाव्ययेत्यत्र प्रत्याहारे चरितार्थ, औड आप इत्यत्र च वक्ष्यते सामान्यग्रहणार्थो डकारोऽन्यथा निरनुबन्धकस्य प्रथ माद्विवचनस्यैव ग्रहण स्याद् न सानुबन्धकस्यौट इति तच्च विरुद्धेत, तस्यापि टकारस्य सुडिति प्रत्याहारे चरितार्थतया औकारस्य निरनुब न्धकत्वात्, तस्मान्महिङो ङकार प्रत्याहार्थो न त्ववयवानुबन्ध इत्या चार्याणा स्मृतिपरम्परैवात्र शरणम्॥

" टित आत्मनेपदाना टेरे "॥ 'टितो लकारस्य स्थानइति'। एतेन टित आत्मनेपदानामिति व्यधिकरणे षष्ठ्याविति दर्शयति, यदि तु प्रत्येकसबन्धादेकवचनमित्याश्रित्य टितामात्मनेपदानामित्याश्रीयते, अकु र्वीत्यत्रापि प्रसज्येतेति भाव। 'प्रकृतैरित्यादि'। यएते तिबादय प्रकृता स्तेषा मध्ये यान्यात्मनेपदानि विहितानीत्येवमात्मनेपदानि विशेष्यन्ते, न च तिबादीना मध्ये शानच् सचिविशिष्टस्ततो न तस्य प्रसङ्ग इत्यर्थ। एव च तङामित्येव वक्तव्य, के चित्तु आने मुगिति निर्देश ज्ञापक वर्ण यन्ति तिङामेवैत्व नान्येषामिति, इतरथा ह्यानयीति वक्तव्य स्यात, नेति

वय, यो ऽल्लादेश आन पूङ्यजोशानन् तस्याय निर्द्देश स्याद् वयमानो यज्ञमानइति ॥

"थास से" ॥ 'पेचिषइति'। लिट्, अत एकहलमध्यइत्यादिना एत्वाभ्यासलोपौ, क्रादिनियमादिट्, इह थ सइति वक्तव्य थकारस्य सकारे कृते परभागस्य टेरेत्वे सति सिद्धमिष्ट, पचथ पचथ अत्रापि प्राप्नोति, आत्मनेपदानामिति वर्तते, एवमप्याथामस्थकारस्य प्राप्नोति, धातोरिति वर्तते, धातोरनन्तरो यस्थकार इति, इहापि तर्हि न प्राप्नोति पचसे चिनुषइति, विकरणेन व्यवधानात्, क्व तर्हि स्यात् यएते लुग्विकरणा श्लुविकरणा श्नम्विकरणा,स्तस्मात् थास से इति वक्तव्यम्, एवमपि सशब्द एवादेशो विधेयो टेरेत्वेनैव सिद्ध, ज्ञापकार्थम्, एतज्ज्ञापयति आत्मनेपदाना य आदेशास्तेषा टेरेत्व न भवतीति, तेन पक्ता पक्तारौ पक्तार इति डारौरसामेत्व न भवति ॥

"लिटस्तझयोरेशिरेच्" ॥ 'पूर्वसूत्रे ज्ञापितमात्मनेपदादेशाना टेरेत्व न भवतीति तेन इशिरजइत्येतावादेशौ न विहितौ। 'शकार सर्वादेशार्थ इति'। अन्यथा धातोरित्यधिकारादादे परस्येति तकारस्य प्रसज्येत, अथ शे इत्येव कस्मान्नोक्त, शइरेजिति ह्युक्ते मत्रालाघव भवति, नैव शक्य, शे इति प्रगृह्यसज्ञा स्यात्, इह च पपे सोममिति पिबादेश प्राप्नोति, जग्ले मम्ले इत्यादौ चात्व न स्यात्, एशि तु न दोष, वर्णे यत्स्यात्तच्च विद्यात्तदाविति न्यायात् ॥

"परस्मैपदाना णलतुसुस्थलथुसणल्वमा" ॥ 'तिबादीनामिति'। एतच्च प्रकरणाल्लभ्यते, तेन क्वसोर्णलादयो न भवन्ति, विधान सामर्थ्याद्वा क्वसोर्णलाद्यभाव ।'लकार स्वरार्थ इति'। अन्यथा प्रत्ययस्य पित्त्वादनुदात्तत्वेपि धातुस्वरे कृते द्वि प्रयोगोद्विर्वचनमिति द्वयो रप्युदात्तत्व प्राप्नोति, अनुदात्त पदमेकवर्जमिति नास्ति यौगपद्येन स भाव पर्यायेण प्रसज्येत ।'णकारो वृद्ध्यर्थ इति'। इदमन्यथासिद्ध णलुत्तमो वे त्यत्र योगविभाग., अत् णिद्भवतीति, तत उत्तमो वा, वा णिद्भवतीति । 'पपाचेति'। कथमय सर्वादेशो यावता नानुबन्धकृतमनेका

त्त्व, ततश्च धातोरित्यधिकारादादे परस्येति पकारस्य प्राप्नोति, अनित्त्वात्सिद्धं, नह्यय णल्विधानसमये प्रत्यय इत्यनित्त्वाद् णकारस्यानेकाल्त्वात्सर्वादेश, ततो णकारस्येत्सञ्ज्ञेत्यानुपूर्व्यात्सिद्धम्, ननु च णकारो न कर्तव्य इत्युक्तम्, एवं तर्हि लकार ओदो क्रियते तस्याप्यनित्त्वात्सिद्धं, ल उत्तमो वेति वक्तव्यम् एवमात औ लस्येति, हल्ङ्यादिसूत्रे चाप्यपृक्त हलिति हल्ग्रहणं लिङ्गं सर्वादेशो णलिति, तद्धि पपाचेत्यादौ माभूदिति, सर्वादेशत्वे च तदुपपद्यते । 'पपक्थेति' । क्रादिनियमात्प्राप्त इडुपदेशे त्वत इति प्रतिषेधान्न भवति, क्व चित्पेचिथेति पाठ, ऋतो भारद्वाजस्येति नियमादिट्, थलि च सेटीत्येत्वाभ्यासलोपौ । 'पेचेति' । धातोरित्यधिकारात्तस्मादित्युत्तरस्यादे परस्येति थकारस्याकारे द्वयोरतो गुणे पररूपत्वम् ॥

"विदो लटो वा" ॥ 'विद ज्ञानइति' । सत्ताविचारार्थयोस्त्वात्मनेपदित्वात्तिबादीनामसम्भवो लाभार्थस्यापि विकरणेन व्यवधानादनन्तराणामसम्भव इति भाव ॥

"ब्रुव पञ्चानामादित आहो ब्रुव" ॥ 'पञ्च णलादय इति' । आदेशा अपि पञ्चैव तत्राप्यादितो णलादय पञ्च न पुनरिच्छात पञ्चेत्यर्थ, कथ पुनर्द्वितीय पञ्चग्रहणमादिग्रहणं चान्तरेणादेशेष्वय विशेषो लभ्यते, ननु सर्वैरेव णलादिभि पञ्चानां स्थाने युक्तम्भवितुम् । उच्यते, पूर्वसूत्रे तावद्यथासङ्ख्यं प्रवर्त्तते ततश्च तत्रैव निर्ज्ञात स्थानिविशेषेण णलादीनां सम्बन्ध तएवेहानुवर्त्तन्तइत्यत्रापि तथैव भविष्यति, ततश्च स्थानिसम्बन्धादादित पूर्वसूत्रे स्थानिविशेषेण सम्बन्धस्य निर्ज्ञातत्वादित्यर्थ । 'आत्थेति' । आहस्य, । 'परेषामिति' । थादीनाम् । ननु च ब्रुव इति यदेतत्पञ्चम्यन्तं तदेवार्थाद्विभक्तिविपरिणामो भवतीत्यादेशसम्बन्धे षष्ठ्यन्तं विज्ञास्यते नार्थो ब्रुव इति पुनर्वचनेन, तत्राह । 'ब्रुव इति' । 'पुनर्वचनमित्यादि' । 'परस्मैपदानामेव हि स्यादिति' । असति श्रुते सम्बन्धिनि विभक्तिविपरिणामो भवति, इह तु परस्मैपदानामिति श्रुतत्वात्तेषामेव स्यादित्यर्थ ॥

"लोटो लङ्वत्" ॥ 'लोटो लङ्वत्कार्यं भवतीति'। अत्र लोडा देशेषु लोट्शब्दो वर्त्तते, लङादेशेषु च लङ्शब्द, लोडादेशाना लङादेश वत्कार्यं भवतीत्यर्थ । तदाह। 'तामादय सलोपश्चेति'। यद्यप्येते ल ड्याहत्य न विहितास्तथापि लङि दृष्टत्वादतिदिश्यन्ते। 'अडाटौ कस्मान्न भवत इति'। लङ्येवाहत्य विहितत्वात् प्रत्युत तयोरेवातिदेशो युक्त इति प्रश्न । 'तथा झेर्जुसादेश इति'। कस्मान्न भवतीति विभक्तिविपरिणामे नानुषङ्ग, लङ शाकटायनस्येति जुस्भावो ऽपि लङ एवाहत्य विहित, इह तु जाग्रतु विदन्तु सिजभ्यस्तविदिभ्यश्चेति लङि दृष्टो जुस्भाव प्राप्नोति। 'वाग्रहणमनुवर्त्ततइति'। लोट इत्युपमेये षष्ठीनिर्द्देशादुपमान षष्ठ्यन्त विज्ञायते लङो यत्कार्यं तल्लोटो भवतीति न तु लङि यत्कार्यं तल्लोटीत्यडाटौ परिहारान्तर, झेर्जुस्भावस्य तु परिहारान्तर लङ शा कटायनस्येत्यत्र स्वयमेव वक्ष्यति ॥

"एरु" ॥ 'लोडादेशानामिकारस्येति'। अथ तु लोडादेशो य इकारस्तस्येत्यर्थोऽभिप्रेत स्यादिट इत्येव ब्रूयात्, तुह्योः विदाङ्कुर्वन्त्विति च निर्द्देशानुपपन्न स्यादथेदानीमिटोऽपि व्यपदेशिवद्भावेनोत्व कस्मान्न भवति, पुन प्रसङ्गविज्ञानाट्टेरेत्व भविष्यति। 'न वोच्चारणसा मर्थ्यादिति'। यदि हिन्योरुत्व स्यात्सेह्युर्मेर्नुरित्येव ब्रूयादेव हि प्रक्रियालाघव भवतीतिभाव । आनि लोट्, हुझल्भ्यो हेर्धिरिति लिङ्ग हिन्यो रुत्वाभावस्य ॥

"सेर्ह्यपिच्च" ॥ 'लुनीहीति'। पित्त्वाभावान्ङित्त्वे सति ई हल्यघोरितीत्व भवति, राध्नुहीत्यत्र गुणाभाव, इह सेर्हिङिच्चेति वक्तव्यम्। नन्वेव ङित्त्वान्ङित्कार्यं भवतु स्थानिवद्भावेन पित्त्वमप्यस्तीत्य नुदात्तत्वमपि प्राप्नोति, ङिच्च पिन्न भवतीति वचनान्न भविष्यति, यथा ऽपि स्तुयाद्राजानमिति, अत्र उतो वृद्धिर्लुकि हलीति पिति विधीयमाना वृद्धिर्न भवति। ब्रूताद्ब्रुवानिति, ब्रुव ईण्न भवति, किं च नाप्राप्ते पित्त्वे ङित्त्वमारभ्यमाण तद्बाधिष्यते ॥

"वा छन्दसि"॥ 'अपित्त्व विकल्प्यतइति'। अनन्तरत्वात्। नादेश इति, व्यवहितत्वात्। 'युयोधीति'। बहुल छन्दसीति शप श्लो द्विर्वचनम्। अत्र पित्त्वात् ङित्त्वाभावे ऽङितश्चेति धिभाव॥

"मेर्नि"॥ 'उत्वलोपयोरपवाद इति'। यथाक्रममेर्लोटो लङ्वदिति प्राप्तयो, इतश्चेतीकारलोपस्यापि लङि दृष्टत्वादतिदेशत प्राप्ति। वय तु ब्रूमो लोटो लङ्वदिति प्राप्तस्यामादेशस्यापवाद इति॥

"आमेत"॥ 'लोट्सम्बन्धिन इति'। लोडादेशसम्बन्धिन इत्यर्थ। एतेन लोटैकारो विशेष्यतइति दर्शयति, एकारेण तु लोटि विशेष्यमाणे तदन्तविधौ सत्येकारान्तस्य लोट आम्विधीयमानोनेकाल्त्वात्सर्वादेश स्या,त्तत्र हि निर्दिश्यमानस्यादेशा भवन्तीति परिहारो वाच्य स्यादित्यर्थ॥

"आडुत्तमस्य पिच्च"॥ 'स चोत्तमपुरुष पिद्भवतीति'। आट एव पित्त्व कस्मान्न विज्ञायते, तुल्यविभक्तिकयोर्हि युक्त सम्बन्ध आट् पिदिति, निरर्थकत्वात्, अनुदात्तत्व तावदागमत्वादेव सिद्ध, करवाणि मार्जानीत्यादौ गुणवृद्ध्योरपि प्रत्यय एव निमित्त न त्वागम॥

"एत ऐ"॥ 'इह कस्मादिति'। गुणस्यान्तवद्भावेन लोड्ग्रहणेन ग्रहणादस्ति प्रसङ्ग इति भाव। 'बहिरङ्गलक्षणत्वादिति'। द्विपदाश्रयत्वाद्गुणस्य बहिरङ्गत्वमैकारस्त्वेकपदाश्रयत्वादन्तरङ्ग, अत एव हेतोरामेत इत्ययमपि विधिर्न भवति॥

"लेटोडाटौ"॥ 'पर्यायेणेति'। न यौगपद्येनाद्विधानसामर्थ्यात्, अन्यथा सवर्णदीर्घत्वे सत्याड्विधानमकिञ्चित्कर स्यात्॥

"आत ऐ"॥ 'करवैते इति'। छन्दस्युभयथेति सार्वधातुकत्वाद्विकरण, आर्द्धधातुकत्वात् ङित्त्वाभावे विकरणस्य गुण, करोतेश्चोत्वाभाव, पवैते अश्नवैथे प्रवैते वियन्त्यैथे॥

"वैतोन्यत्र"॥ 'एतद्विषयमिति'। षष्ठीसमास, एव विषयमिति तु युक्त पाठ, उदाहरणान्युपसवाद्याशङ्कयोश्चेत्यत्र व्युत्पादितानि। 'दधसइति'। थास से, शप श्लु, अट्, घोर्लोपो लेटि वेत्याकारलोप॥

"इतश्च लोपः परस्मैपदेषु" ॥ 'परस्मैपदग्रहणमित्यादि'। अन्यथा टेरेत्वस्यावकाशो ऽन्ये लकाराः, लेट्यपीकारादन्यत्र इतो लोपस्य परस्मैपदानि, इडादिषूभयप्रसङ्गे परत्वादितो लोपः स्यात् ॥

"स उत्तमस्य" ॥ 'करवाव करवामेति'। पूर्ववद्गुणोत्वाभावौ, लोटोडाटावित्याट्। 'उत्तमग्रहणमित्यादि'। इह वस्मसग्रहणमेव कर्त्तव्यं तत्रायमप्यर्थः, स इति न वक्तव्यं भवति, अलोन्त्यस्येत्येव सिद्धं, यदा च पुरुषान्तरस्य स्थाने वस्मसौ भवतः एतयोश्च स्थाने सकारान्तं पुरुषान्तरं तदापि वाग्रहणानुवृत्त्यैव लोपालोपौ यथादर्शनं व्यवस्थितौ भविष्यतः, यथा क्रियमाणे ग्युत्तमग्रहणे वाग्रहणं चानुवर्त्तते, उत्तरत्र नित्यग्रहणं स्यात् नित्यं ङित इति ॥

"लिङः सीयुट्" ॥ लिङ्शब्दोत्र लिङादेशेषु स्थानिवद्भावात् प्रयुक्त इत्याह। "लिङादेशानामिति"। सीयुट्सकारस्यार्द्धधातुके लिङि श्रवणं सार्वधातुके लिङः स लोपोनन्त्यस्येति स लोपः, यकारस्याजादिषु श्रवणमन्यत्र लोपः ॥

"यासुट् परस्मैपदेषूदात्तो ङिच्च" ॥ 'परस्मैपदविषयस्येति'। लिङः परेषां परस्मैपदानामसम्भवात्। 'सीयुटोपवाद इति'। नाप्राप्ते तस्मिन्नारम्भात्, तेन यासुटि कृते तस्य तिङ्भक्तत्वात्तदादेः सीयुट् प्रसङ्ग इति न चोदनीयं सत्यपि हि सम्भवे सामान्यविधेर्विशेषविधिर्बाधकः, कथं तर्हि कृषीष्ट इत्यादिषु सुटि कृते सीयुड् भवति, ननु तत्रापि सुटा सीयुड् बाधनीयः, अत्र परिहारं सुद्धियो वृत्तिकारः स्वयमेव वक्ष्यति। 'आगमत्वादनुदात्तत्वे प्राप्त इति'। अत एव यासुडुदात्तवचनाद्विज्ञायते आगमा अनुदात्ता भवन्तीति, अन्यथा यासुटः प्रत्ययभक्तत्वात्प्रत्ययस्वरेणैव सिद्धमुदात्तत्वं, नैतदस्ति ज्ञापकं, यानि पिद्वचनानि तदर्थमेतत्स्यात्, यद्येतावत्प्रयोजनमपिदित्येव ब्रूयात्, तदेतदुदात्तवचनं ज्ञापकमेवागमा अनुदात्ता भवन्तीति। 'तत्र तत्कार्याणामसम्भवादिति'। ग्रहिज्यादिसूत्रेपि धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञानात्प्रत्ययस्यैव ग्रहणं कुर्यादिति विकरणाश्रयो धातोर्गुणः, अत

उत्सार्वधातुकइत्युत्व, ये चेत्युकारलोप, । 'कुर्युरिति' । झेर्जुस्, लिङ स लोपोनन्त्यस्य उस्यपदान्तात् । 'स्थानिवद्भावादेवेति' । सार्वधातुकमपिदित्यतिदेशादिति नोक्त, पिदर्थत्वात् ङिद्वचनस्य, 'यासुटो ङिद्वचनमिति' । यासुडादेर्लिङो ङिद्वचनमित्यर्थ । इदानीमेव ह्युक्त ङित्व तु लिङ एव विधीयतइति, एतच्च ज्ञापन पिच्च ङिन्न भवतीत्येतदनाश्रित्योच्यते, तदाश्रयणे तु स्थानिवद्भावेन प्राप्त ङित्वमौपदेशिकेन पित्त्वेन बाध्यतइति प्राप्त्यर्थमेव ङिद्वचन स्यात् ॥

"किदाशिषि" ॥ 'तस्य यासुट्' 'किद्भवतीति' । तस्य यासुड् भवति स च लिङ्किद्भवतीत्यर्थ । अन्यथा प्रत्ययस्येद कित्त्वमित्यनन्तरग्रन्थेन विरोध स्यात् । 'प्रयोजनाभावादिति' । वचिस्वपीत्यत्रापि धातो स्वरूपग्रहणादिति प्रत्ययस्यैवेद ग्रहण स्यादन्यथा वाच्यति वाचिक्र कथयति वाग्जहातीत्यत्रापि स्यात् । 'गुणवृद्धिप्रतिषेधस्तुल्य इति' । किमर्थ तर्हि कित्त्वविधानमित्यत आह । 'सम्प्रसारणमिति' । 'जागर्य्यादिति' । जाग्रो ऽविचिण्णल्ङित्स्विति गुण ॥

"झस्य रन्" ॥ झस्येत्यकारोच्चारणात्सङ्घातस्यैव ग्रहण न वर्णस्य अन्यथा तादेशविधाविव झ इत्येव ब्रूयादिति मन्यमान आह । 'लिङादेशस्य झस्येति' । 'झोन्तापवाद इति' । झकारस्य योन्तादेशस्तस्यापवाद इत्यर्थ, झोन्त इत्यस्य वा विधेरपवाद इत्यर्थ । ननु झवर्णस्यान्तादेश समुदायस्य रन्विति कथ भिन्नविषययोर्बाध्यबाधकभाव, विरोधात्, येन नाप्राप्तिन्यायाच्च । झोन्तापवाद इत्युपलक्षण, कृषीरन् तृषीरन्नित्यत्रात्मनेपदेष्वनत इत्यस्यापवाद, ननु चाप्रवादविप्रतिषेधादद्भाव एव प्राप्नोति, न, प्रतिपदविधेर्बलीयस्त्वात्, प्रतिपदविहितो हि रन्भाव, यद्वा कृषीरन् तृषीरन्नित्यत्रापि प्रवर्त्ततामद्भाव, सत्यपि तु तस्मिन्पुन प्रसङ्गविज्ञानात्सङ्घातस्य रन् भविष्यति ॥

"इटोत्" ॥ 'नैवायमादेशावयव इति' । तेन नास्येत्सञ्ज्ञाया प्रयोजन स्वयमेव निवृत्तत्वादित्यर्थ । प्रत्युतेत्सञ्ज्ञाया स्वरितत्व

स्यात्, न विभक्तौ तुस्मा इत्यत्राभ्युपगमवादेनोक्त किमोद्दिटोदिति चात्र प्रतिषेधो न भवत्यनित्यत्वादस्येति । 'अर्थवद्ग्रहणादित्यादि' । ल स्थाने य इडिति विशेषणादप्यागमस्येटो ग्रहणाभाव ॥

"सुट् तिथो" ॥ तिथोरिति सप्तमी वा स्यात् षष्ठी वा, आद्ये पक्षे यस्मिन्विधिस्तदादावल्ग्रहणइति तकारथकारादेर्लिङादेशस्य सुटा भाव्यमिति कृषीष्ट कृषीष्ठा इत्यत्रैव स्यात्, कृषीयास्ता कृषीयास्थामित्यत्र न स्यात् सुटा च सीयुटो बाध स्यात्, उभयोरपि लिङादेशभक्तत्वादिति द्वितीय पक्षमाश्रित्याह । 'लिङ सम्बन्धिनोस्तकारथकारयोरिति' । एतदेव स्पष्टयति । 'तकारथकाराविति' । 'लिङ् तद्विशेषणमिति' । लिङ्शब्देन तदादेशा उच्यन्ते, एव लिङ्सबन्धिनोरित्यत्रापि । 'कृषीष्टेति' । विध्यादौ लिङि सार्वधातुकत्वाल्लिङ स लोप इति लोपेन सुट श्रवणा भावादाशिषि लिङेवोदाहृत ॥

"झेर्जुस्" ॥ 'झोन्तापवाद इति' । पूर्ववद्व्याख्येय, जागृयुरित्यादौ च पूर्ववदेवादभ्यस्तादित्यस्यापि बाध । 'पचेयुरिति' । अतो येय इतीयादेश, शपा सहाद्गुण ॥

"सिजभ्यस्तविदिभ्यश्च" ॥ सत्ताविचारणार्थयोर्विदोरात्मनेपदित्वादसम्भव एव झे, लाभार्थस्यापि विकरणेन व्यवधानादनन्तरस्य झेरसम्भव, तस्माल्लुग्विकरणस्यैव विदेर्ग्रहणमित्याह । 'वेत्तेश्चेति' । 'अभ्यस्तविदिग्रहणमसिजर्थमिति' । न चैव लोडादिष्वपि प्रसङ्ग इत्याह । 'ङित इति चानुवर्ततइति' ॥

"आत" ॥ 'सिच आकारान्ताच्च परस्य झेरिति' । द्वाभ्यामनन्तरस्येत्यर्थ । 'कथमिति' । आत सिचा व्यवधानाद् द्वाभ्यामानन्तर्य न सम्भवतीति प्रश्न । सिज्लुकीत्यादि परिहार, श्रुत्या श्रवणेन, तदेव द्वाभ्यामानन्तर्याश्रयणात्सिज्लुगन्ताद् झेर्जुस् भवतीत्युक्त भवति । 'अभूवन्निति' । भुवो वुग्लुङ्लिटोरिति वुक् । 'तुल्यजातीयापेक्षत्वाच्चेति' । द्वाभ्यामानन्तर्यस्याश्रयणात् सिज्लुगन्तस्य ग्रहणमित्युक्त, तेन

सिज्लुगन्ताद्यदि भवति आत एवेति नियमाश्रयणाच्छ्रूयमाणे सिच्यश्रा षुरित्यादावनाकारान्तादपि भवत्येवेत्यर्थ ॥

"लङ शाकटायनस्यैव" ॥ 'अयुरवुरिति'। शपो लुक्, उस्यप दान्तादिति पररूपत्वम्। 'लङेवेति'। लुङ्लिङोस्तावद्भवितव्य, लङस्तु स्यप्रत्ययेन भेव्यवधानमिति भाव। 'यान्तु वान्त्विति'। लोटो लङ्वदि त्यत्र तु वाग्रहणानुवृत्त्याप्ययमर्थ साधित। ननु च लङ्ग्रहणाद्यवा ज्जुसभावोय लोटो माभूत् सिजभ्यस्तेत्यय तु स्यादेव, तत्राह। 'सिज भ्यस्तेत्यादि'। कथमित्यत्राह। 'जुसभावमात्र हीति'। कथ पुनरात-इत्यनुवर्तमाने जुसभावमात्र मुख्येन लङा शक्य विशेषयितु, लङ इति योगविभाग कर्तव्य इति मन्यते। ननु चात इत्येतत्सिज्ग्रहणानुवृत्त्या नियमार्थमित्युक्त ततश्चायुरित्यत्र केन चिदप्राप्त्वाद्विध्यर्थमेतत्किमेव कारेणेत्यत्राह। 'एवकार उत्तरार्थ इति'। लिट् च, लिङाशिषीत्य त्रास्य प्रयोजन दशयिष्यति ॥

"द्विषश्च" ॥ द्विषिरदादि ॥

"तिङ्शित् सार्वधातुकम्" ॥ 'तरति नयतीति'। तिङ सार्व धातुकत्वाच्छप्, शप सार्वधातुकत्वाद्धातोर्गुण। 'रोदितीति'। शपो लुकि रुदादिभ्य सार्वधातुकइतीट्। 'पवमानो यजमान इति'। पूर्व वच्छब्गुणौ ॥

"आर्धधातुक शेष" ॥ 'धातुसशब्दनेनेति'। धातुशब्दमु च्चार्येत्यर्थ। अत्र हि यङ्विधौ यद्धातुग्रहण शमिधातोरिति वा यच्च धातोरिति तदुभयमनुवर्तते, तत्रैकेनाधातुप्रत्ययो व्यावर्त्यते, अपरेण धातुप्रत्ययो विशिष्यते, धातोरित्येव यो विहित इति, तेनायमर्थ। 'लूभ्या लूभि जुगुप्सतइति'। यद्यप्यत्र धातोरेव विहितस्तथापि धातु शब्दमुच्चार्य न विहित इति भवति प्रत्युदाहरण, शेषग्रहण तिङ्शितो माभूत्, अन्यथैकसञ्ज्ञाधिकाराभावात्प्रत्ययादिसञ्ज्ञानामिव समावेश स्यात्, यद्येवकारोनुवर्त्तते शक्य शेषग्रहणमकर्त्तुम् ॥

"लिटि च" ॥ 'पेचिथ शेकिथेति'। ऋतो भारद्वाजस्येति नियमादिट्, थलि च सेटीत्येत्वाभ्यासलोपौ। 'जग्ले मम्लइति'। आर्धधातुकत्वादातो लोप इटि चेत्याकारलोपः, यदुक्तं सार्वधातुकसंज्ञाया अपवाद इति तद्विघटयति। 'ननु चेति'। सत्यमित्यादिना ऽपवादत्वं समर्थयते ॥

"छन्दस्युभयथा" ॥ 'सर्वमेव प्रकरणमिति'। तिङ्शित्सार्वधातुकमित्यारभ्य चतुःसूत्रीप्रकरणम्। 'भूभावो न भवतीति'। तदानीमेवार्धधातुकत्वात् श्नसोरल्लोप इत्यस्याभावः ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां तृतीयस्याध्यायस्य चतुर्थः पादः। समाप्तश्चायमध्यायः ॥

# REPRINT FROM THE PANDIT.

# काशिकाव्याख्या

## पदमञ्जरी



महामहोपाध्यायश्रीहरदत्तमिश्रविरचिता



तदुत्तरार्धम्। Part 2

काशिकराजकीयसंस्कृतपाठशालायां व्याकरणप्रधानाध्यापकेन

भारद्वाजदामोदरशास्त्रिणा संशोधितम्।

काश्याम्।

मेडिकल्हाल्नामके यन्त्रालये मुद्रितम्।

सं० १९५५-१८९८ ई०।



"Pandit" Journal Benares

# काशिकापदमञ्जर्याः माहेश्वरसूत्राणां सूचीपत्त्रम् ।

# काशिकापदमञ्जर्योः

# पाणिनिसूत्राणां सूचीपत्रम् ।

* अत्र सूत्रेवासिनोद्धृति अशु॰ वासीति शु॰ ।

| | | काशिका | | पदमञ्जरी | |
|---|---|---|---|---|---|
| | अ. पा. सू. | | पृ. | | पृ. |
| ई हल्यघोः | ६ । ४ । ११३ | उ. | ३२३ | उ | ६८० |
| उगवादिभ्यो यत् | ५ । १ । २ | उ | १ | उ. | २२८ |
| उगितश्च | ४ । १ । ६ | पू. | ३३१ | उ. | २० |
| उगितश्च | ६ । ३ । ४५ | उ. | २७३ | उ. | ५९९ |
| उगिदचां सर्वनाम० | ७ । १ । ७० | उ. | ३५८ | उ. | ७२६ |
| उग्रंपश्येरंमदपाणिंध० | ३ । २ । ३७ | पू. | २२६ | प. | ६१९ |
| उच्चैरुदात्तः | १ । २ । २९ | पू. | ३८ | पू. | १६८ |
| उच्चैस्तरां वा वषट्कारः | १ । २ । ३५ | पू. | ४० | पू. | १७३ |
| ·उञः | १ । १ । १७ | पू. | १० | पू. | ६८ |
| उञि च पदे | ८ । ३ । २१ | उ. | ५३१ | उ. | ९८० |
| उञ्छति | ४ । ४ । ३२ | पू. | ४६७ | उ. | ० |
| उञ्छादीनां च | ६ । १ । १६० | उ. | १८८ | उ. | ५०६ |
| उणादयो बहुलम् | ३ । ३ । १ | पू. | २.९ | पू. | ६६२ |
| उतश्च प्रत्यया० | ६ । ४ । १०६ | उ. | ३२१ | उ. | ६७७ |
| उताप्योः समर्थयो० | ३ । ३ । १५२ | पू. | २९४ | पू. | ७०५ |
| उतो वृद्धिर्लुकि हलि | ७ । ३ । ८९ | उ. | ४३४ | उ. | ८३६ |
| उत्क उन्मनाः | ५ । २ । ८० | उ. | ५८ | उ. | ३११ |
| उत्करादिभ्यश्छः | ४ । २ । ९० | पू. | ४०७ | उ. | ० |
| उत्तमैकाभ्यां च | ५ । ४ । ९० | उ. | १२४ | उ. | ४०१ |
| उत्तरपथेनाहृतं च | ५ । १ । ७७ | उ. | २१ | उ. | २५९ |
| उत्तरपदवृद्धौ सर्वं च | ६ । २ । १०५ | उ. | २३६ | उ. | ५५५ |
| उत्तरपदस्य | ७ । ३ । १० | उ. | ४१० | उ. | ८०५ |
| उत्तरपदादिः | ६ । २ । १११ | उ. | २३७ | उ. | ५५६ |
| उत्तरमृगपूर्वाच्च सक्थ्नः | ५ । ४ । ९८ | उ. | १२६ | उ. | ० |
| उत्तराच्च | ५ । ३ । ३८ | उ. | ८२ | उ. | ३४० |
| उत्तराधरदक्षिणादा० | ५ । ३ । ३४ | उ. | ८१ | उ. | ३३९ |
| उत्परस्यातः | ७ । ४ । ८८ | उ. | ४.० | उ. | ८७१ |
| उत्सादिभ्यो ऽञ् | ४ । १ । ८६ | पू. | ३५४ | उ. | ७७ |
| उद ईत् | ६ । ४ । १३९ | उ. | ३२९ | उ. | ० |
| उदः स्थास्तम्भोः पूर्व० | ८ । ४ । ६१ | उ. | ५७३ | उ. | १०३४ |
| उदकस्योदः संज्ञायाम् | ६ । ३ । ५७ | उ. | २७६ | उ. | •६०४ |
| उदके केवले | ६ । २ । ९६ | उ. | २३४ | उ. | ५५४ |
| उदक् च विपाशः | ४ । २ । ७४ | पू. | ४०१ | उ. | १४६ |
| उदङ्को ऽनुदके | ३ । ३ । १२३ | पू. | २८५ | पू. | ६९४ |
| उदन्वानुदधौ च | ६ । २ । १३ | उ. | ४९८ | उ. | ९३६ |
| उदराट्ठगाद्यूने | ५ । २ । ६७ | उ. | ५५ | उ. | ३०८ |
| उदराश्वेषुषु | ६ । २ । १०७ | उ. | २३६ | उ. | ० |

| | | काशिका | | पदमञ्जरी | |
|---|---|---|---|---|---|
| | अ॰ पा. सू. | | पृ. | | पृ. |
| ऊर्णोतेर्विभाषा | ७ । ३ । ६० | उ. | ४३४ | उ. | ० |
| ऊर्ध्वाद्विभाषा | ५ । ४ । १३० | उ. | १३४ | उ. | ० |
| ऊर्ध्वे शुषिपूरोः | ३ । ४ । ४४ | पू. | ३१२ | पू. | ७३२ |
| ऊर्यादिच्विडाचश्च | १ । ४ । ६१ | पू. | ६३ | पू. | ३२० |
| ऊषसुषिमुष्कमधो रः | ५ । २ । १०७ | उ. | ६५ | उ. | ३२३ |
| ऋक्पूरब्धूःपथामानक्षे | ५ । ४ । ७४ | उ. | १२० | उ. | ३६७ |
| ऋचः शे | ६ । ३ । ५५ | उ. | २७५ | उ. | ६०४ |
| ऋचि तनुघमक्षुत॰ | ६ । ३ । १३३ | उ. | २६३ | उ. | ६२३ |
| ऋच्छत्यृताम् | ७ । ४ । ११ | उ. | ४४३ | उ. | ८५१ |
| ऋणमाधमर्ण्ये | ८ । २ । ६० | उ. | ५११ | उ. | ६५३ |
| ऋत उत् | ६ । १ । १११ | उ | १७४ | उ. | ४८० |
| ऋतश्च | ७ । ४ । ६२ | उ. | ४६१ | उ. | ८७२ |
| ऋतश्च संयोगादेः | ७ । २ । ४३ | उ. | ३८५ | उ. | ७७३ |
| ऋतश्च संयोगादेर्गुणः | ७ । ४ । १० | उ. | ४४३ | उ. | ८५० |
| ऋतश्छन्दसि | ५ । ४ । १५८ | उ. | १३६ | उ. | ० |
| ऋतष्ठञ् | ४ । ३ । ७८ | पू. | ४३६ | उ. | ११६ |
| ऋतेरीयङ् | ३ । १ । २६ | पू. | १६१ | पू. | ५४१ |
| ऋतो ङिसर्वनाम॰ | ७ । ३ । ११० | उ. | ४३८ | उ. | ८४१ |
| ऋतोऽञ् | ४ । ४ । ४६ | पू. | ४७० | उ. | २०८ |
| ऋतो भारद्वाजस्य | ७ । २ । ६३ | उ. | ३९२ | उ. | ७८० |
| ऋतो रण् | ५ । १ । १०५ | उ. | २८ | उ. | २६५ |
| ऋतो विद्यायोनिसंबं॰ | ६ । ३ । २३ | उ. | २६६ | उ. | ५८६ |
| ऋत्यकः | ६ । १ । १२८ | उ. | १७६ | उ. | ४८७ |
| ऋत्विग्दधृक्स्रग्दिगु॰ | ३ । २ । ५६ | पू. | २३१ | पू. | ६२४ |
| ऋत्व्यवास्त्व्यवा॰ | ६ । ४ । १७५ | उ. | ३४० | उ. | ६६८ |
| ऋदुपधाच्चाक्लृपि॰ | ३ । १ । ११० | पू. | २०६ | पू. | ५६६ |
| ऋदुशनस्पुरुदंसो.ने॰ | ७ । १ । ६४ | उ. | ३६५ | उ. | ७३६ |
| ऋदृशोऽङि गुणः | ७ । ४ । १६ | उ. | ४४४ | उ. | ८५३ |
| ऋद्धनोः स्ये | ७ । २ । ७० | उ. | ३६४ | उ. | ७८२ |
| ऋन्नेभ्यो ङीप् | ४ । १ । ५ | पू. | ३३१ | उ. | २० |
| ऋषभोपानहोर्ञ्यः | ५ । १ । १४ | उ. | ५ | उ. | २३६ |
| ऋष्यन्धकवृष्णिकुरु॰ | ४ । १ । ११४ | पू. | ३६५ | उ. | १०३ |
| ऋहलोर्ण्यत् | ३ । १ । १२४ | पू. | २१२ | पू. | ६०१ |
| ऋत इद्धातोः | ७ । १ । १०० | उ. | ३६७ | उ. | ७४५ |
| ऋदोरप् | ३ । ३ । ५७ | पू. | २७२ | पू. | ६८० |
| एकः पूर्वपरयोः | ६ । १ । ८४ | उ. | १६७ | उ. | ४५६ |
| एकगोपूर्वाट्ठञ् नि॰ | ५ । २ । ११८ | उ. | ६८ | उ. | ३२६ |

* एतस्य गणसूत्रत्वेन व्यवस्थापनं पदमञ्जर्याम् ।

* अत्र कु॰ इति अमु॰ नू॰ पु॰ ।

| | | काशिका | | पदमञ्जरी | |
|---|---|---|---|---|---|
| | अ. पा. सू. | | पृ. | | पृ. |
| कृकणपर्णाद्भारद्वा० | ४ । २ । १४५ | पू. | ४२२ | उ. | १६१ |
| कृच्छ्रगहनयोः कषः | ७ । २ । २२ | उ. | ३७६ | उ. | ७६३ |
| कृञः प्रतियत्ने | २ । ३ । ५३ | पू. | १५२ | पू. | ४५० |
| कृञः श च | ३ । ३ । १०० | पू. | २८० | पू. | ६८७ |
| कृञो द्वितीयतृतीय० | ५ । ४ । ५८ | उ. | ११६ | उ. | ३६२ |
| कृञो हेतुताच्छील्या० | ३ । २ । २० | पू. | २२३ | पू. | ६१५ |
| कृञ् चानुप्रयुज्यते | ३ । १ । ४० | पू. | १६३ | पू. | ५५१ |
| कृतलब्धक्रीतकुश० | ४ । ३ । ३८ | पू. | २२६ | उ. | १६६ |
| कृते ग्रन्थे | ४ । ३ । ११६ | पू. | ४४६ | उ. | १८७ |
| कृत्तद्धितसमासाश्च | १ । २ । ४६ | पू. | ४४ | पू. | १८५ |
| कृत्यचः | ८ । ४ । २६ | उ. | ५६५ | उ. | १०२७ |
| कृत्यतुल्याख्या अजा० | २ । १ । ६८ | पू. | १२३ | पू. | ३८४ |
| कृत्यल्युटो बहुलम् | ३ । ३ । ११३ | पू. | २८३ | पू. | ६६१ |
| कृत्याः प्राग्० | ३ । १ । ९५ | पू. | २०६ | पू. | ५६१ |
| कृत्यानां कर्तरि वा | २ । ३ । ७१ | पू. | १५७ | पू. | ४५७ |
| कृत्यार्थे तवैकेन्के० | ३ । ४ । १४ | पू. | ३०५ | पू. | ७२१ |
| कृत्याश्च | ३ । ३ । १७१ | पू. | २९९ | पू. | ७१२ |
| कृत्यैरधिकार्थवचने | २ । १ । ३२ | पू. | ११३ | पू. | ३६५ |
| कृत्यैर्ऋणे | २ । १ । ४३ | पू. | ११६ | पू. | ३७० |
| कृत्योकेष्णुच्चार्वादि० | ६ । २ । १६० | उ. | २५१ | उ. | ५६८ |
| कृत्वोर्थप्रयोगे का० | २ । ३ । ६४ | पू. | १५५ | पू. | ४५२ |
| कृदतिङ् | ३ । १ । ९३ | पू. | २०५ | पू. | ५८७ |
| कृन्मेजन्तः | १ । १ । ३९ | पू. | १७ | पू. | ८७ |
| कृपो रो लः | ८ । २ । १८ | उ. | ४६६ | उ. | ९३७ |
| कृमृदृरुहिभ्यश्छन्दसि | ३ । १ । ५९ | पू. | १९८ | पू. | ५६३ |
| कृषेश्छन्दसि | ७ । ४ । ६४ | उ. | ४५४ | उ. | ० |
| कृसृभृवृस्तुद्रुस्रुश्रुवो० | ७ । २ । १३ | उ. | ३७६ | उ. | ७५८ |
| कॄ धान्ये | ३ । ३ । ३० | पू. | २६६ | पू. | ६७३ |
| केकयमित्रयुप्रलयानां० | ७ । ३ । २ | उ. | ४०७ | उ. | ८०२ |
| के ऽणः | ७ । ४ । १३ | उ. | ४४४ | उ. | ८५२ |
| केदाराद्यञ्च | ४ । २ । ४० | पू. | ३६० | उ. | ० |
| केवलमामकभागधे० | ४ । १ । ३० | पू. | ३३८ | उ. | ३८ |
| केशाद्वोऽन्यतर० | ५ । २ । १०९ | उ. | ६६ | उ. | ३२४ |
| केशाश्वाभ्यां य० | ४ । २ । ४८ | पू. | ३६३ | उ. | ० |
| कोः कत्तत्पुरुषेऽचि | ६ । ३ । १०१ | उ. | २८६ | उ. | ६१७ |
| कोपधाच्च | ४ । २ । ७९ | पू. | ४०२ | उ. | ० |
| कोपधाच्च | ४ । ३ । १३७ | पू. | ४५४ | उ. | १६२ |

| | अ॰ पा॰ सू॰ | काशिका | | पदमञ्जरी | |
|---|---|---|---|---|---|
| | | | पृ॰ | | पृ॰ |
| क्तस्याचि | ७ । ३ । ७२ | उ. | ४२६ | उ. | ८२७ |
| खः सर्वधुरात् | ४ । ४ । ७८ | पू. | ४७६ | उ. | २१३ |
| ख च | ४ । ४ । १३२ | पू. | ४८७ | उ. | २२५ |
| खचि हृस्वः | ६ । ४ । ९४ | उ. | ३१९ | उ. | ० |
| खट्वात्तेपे | २ । १ । २६ | पू. | १११ | पू. | ३६२ |
| खपिडकादिभ्यश्च | ४ । २ । ४५ | पू. | ३९१ | उ. | १३५ |
| खनो घ च | ३ । ३ । १२५ | पू. | २८६ | पू. | ६९४ |
| खरवसानयोर्विसर्जं० | ८ । ३ । १५ | उ. | ५३० | उ. | ९७७ |
| खरि च | ८ । ४ । ५५ | उ. | ५७२ | उ. | १०३३ |
| खलगोरथात् | ४ । २ । ५० | पू. | ३९३ | उ. | १३८ |
| खलयवमाषतिलवृष० | ५ । १ । ७ | उ. | ३ | उ. | २३० |
| खार्या ईकन् | ५ । १ । ३३ | उ. | १० | उ. | २४५ |
| खार्याः प्राचाम् | ५ । ४ । १०१ | उ. | १२७ | उ. | ४०२ |
| खित्यनव्ययस्य | ६ । ३ । ६६ | उ. | २७८ | उ. | ६०७ |
| खिदेश्छन्दसि | ६ । १ । ५२ | उ. | १५७ | उ. | ४४३ |
| ख्यत्यात्परस्य | ६ । १ । ११२ | उ. | १७१ | उ. | ४८० |
| गतिकारकोपपदा० | ६ । २ । १३९ | उ. | २४४ | उ. | ५६१ |
| गतिबुद्धिप्रत्यवसाना० | १ । ४ । ५२ | पू. | ८९ | पू. | ३१० |
| गतिरनन्तरः | ६ । २ । ४९ | उ. | २२२ | उ. | ५४० |
| गतिर्गतौ | ८ । १ । ७० | उ. | ४८७ | उ. | ९१५ |
| गतिश्च | १ । ४ । ६० | पू. | ९३ | पू. | ३२० |
| गत्यर्थकर्मणि द्वितो० | २ । ३ । १२ | पू. | १४० | पू. | ४२४ |
| गत्यर्थलोटा लृणन० | ८ । १ । ५१ | उ. | ४८० | उ. | ९०७ |
| गत्यर्थाकर्मकश्लिष० | ३ । ४ । ७२ | पू. | ३१९ | पू. | ७४२ |
| गत्वरश्च | ३ । २ । १६४ | पू. | २५३ | पू. | ० |
| गदमदचरयमश्चा० | ३ । १ । १०० | पू. | २०७ | पू. | ५९३ |
| गन्तव्यपण्यं वाणिजे | ६ । २ । १३ | उ. | २०९ | उ. | ५३२ |
| गन्धस्येदुत्पूतिसुसु० | ५ । ४ । १३५ | उ. | १३५ | उ. | ४०९ |
| गन्धनावक्षेपणसेवन० | १ । ३ । ३२ | पू. | ६१ | पू. | २३४ |
| गमः क्वौ | ६ । ४ । ४० | उ. | ३०५ | उ. | ६५३ |
| गमश्च | ३ । २ । ४७ | पू. | २२८ | पू. | ६२० |
| गमहनजनखनघ० | ६ । ४ । ९८ | उ. | ३१९ | उ. | ६७५ |
| गमेरिट् परस्मैपदेषु | ७ । २ । ५८ | उ. | ३९० | उ. | ७७६ |
| गम्भीराञ्ञ्यः | ४ । ३ । ५८ | पू. | ४३३ | उ. | १७३ |
| गर्गादिभ्यो यञ् | ४ । १ । १०५ | पू. | ३६१ | उ. | १०० |
| गर्तोत्तरपदाच्छः | ४ । २ । १३७ | पू. | ४१९ | उ. | १५९ |
| गर्हायां लडपि० | ३ । ३ । १४२ | पू. | २९२ | पू. | ७०३ |

| | | काशिका | | पदमञ्जरी | |
|---|---|---|---|---|---|
| | अ० पा० सू० | | पृ० | | पृ० |
| चेले क्नोपेः | ३ । ४ । ३३ | पू. | ३१० | पू. | ७३० |
| चोः कुः | ८ । २ । ३० | उ. | ५०३ | उ. | ९४४ |
| चौ | ६ । १ । २२२ | उ. | २०३ | उ. | ५२५ |
| चौ | ६ । ३ । १३८ | उ. | २६४ | उ. | ६२४ |
| च्छ्वोः शूडनुनासिके च | ६ । ४ । १९ | उ. | ३०० | उ. | ६३७ |
| च्लि लुङि० | ३ । १ । ४३ | पू. | १९४ | पू. | ५५४ |
| च्लेः सिच् | ३ । १ । ४४ | पू. | १९४ | पू. | ५५७ |
| च्वौ च | ७ । ४ । २६ | उ. | ४४६ | उ. | ० |
| छगलिनो ढिनुक् | ४ । ३ । १०९ | पू. | ४४८ | उ. | ० |
| छ च | ४ । २ । २८ | पू. | ३८७ | उ. | १३२ |
| छत्रादिभ्यो णः | ४ । ४ । ६२ | पू. | ४७३ | उ. | २१० |
| छदिरुपधिबलेर्ढञ् | ५ । १ । १३ | उ. | ५ | उ. | २३५ |
| छन्दसि गत्यर्थेभ्यः | ३ । ३ । १२९ | पू. | २८७ | पू. | ० |
| छन्दसि घस् | ५ । १ । १०६ | उ. | २६ | उ. | २६५ |
| छन्दसि च | ५ । १ । ६७ | उ. | १९ | उ. | ० |
| छन्दसि च | ५ । ४ । १४२ | उ. | १३६ | उ. | ० |
| छन्दसि च | ६ । ३ । १२६ | उ. | २६२ | उ. | ६२३ |
| छन्दसि ठञ् | ४ । ३ । १९ | पू. | ४२६ | उ. | १६५ |
| छन्दसि निष्टर्क्य० | ३ । १ । १२३ | पू. | २११ | पू. | ६०० |
| छन्दसि परिपन्थि० | ५ । २ । ८९ | उ. | ६० | उ. | ३१३ |
| छन्दसि परेऽपि | १ । ४ । ८१ | पू. | ६७ | पू. | ३२७ |
| छन्दसि पुनर्वस्वोर० | १ । २ । ६१ | पू. | ४६ | पू. | १९८ |
| छन्दसि लिट् | ३ । २ । १०५ | पू. | २४१ | पू. | ६३५ |
| छन्दसि लुङ्लङ्० | ३ । ४ । ६ | पू. | ३०३ | पू. | ७२० |
| छन्दसि वनसनर० | ३ । २ । २७ | पू. | २२४ | पू. | ६१७ |
| छन्दसि वा प्राम्रे० | ८ । ३ । ४९ | उ- | ५३९ | उ. | ९९३ |
| छन्दसि शायजपि | ३ । १ । ८४ | पू. | २०२ | पू. | ५७० |
| छन्दसि सहः | ३ । २ । ६३ | पू, | २३२ | पू. | ६२५ |
| छन्दसीरः | ८ । २ । १५ | उ. | ४९८ | उ. | ० |
| छन्दसो निर्मिते | ४ । ४ । ९३ | पू. | ४७९ | उ. | २१८ |
| छन्दसो यदणौ | ४ । ३ । ७१ | पू. | ४३७ | उ. | १७८ |
| छन्दस्यनेकमपि० | ८ । १ । ३५ | उ. | ४७९ | उ. | ९०४ |
| छन्दस्यपि दृश्यते | ६ । ४ । ७३ | उ. | ३१४ | उ. | ० |
| छन्दस्यपि दृश्यते | ७ । १ । ७६ | उ. | ३६१ | उ. | ७३३ |
| छन्दस्युभयथा | ३ । ४ । ११७ | पू. | ३२८ | उ. | ७५४ |
| छन्दस्युभयथा | ६ । ४ । ५ | उ. | २९६ | उ. | ६२९ |
| छन्दस्युभयथा | ६ । ४ । ८६ | उ. | ३१६ | उ. | ० |

| | | काशिका | | पदमञ्जरी | |
|---|---|---|---|---|---|
| | अ. पा. सू. | | पृ. | | पृ. |
| द्विगुश्च | २ । १ । २३ | पू. | १११ | पू. | ३६० |
| द्विगोः | ४ । १ । २१ | पू. | ३३५ | उ. | ० |
| द्विगौ ष्ठंश्च | ५ । १ । ५४ | उ. | १५ | उ. | २४६ |
| द्विगोर्यप् | ५ । १ । ८२ | उ. | २३ | उ. | २६० |
| द्विगोर्लुगनपत्ये | ४ । १ । ८८ | पू. | ३५५ | उ. | ७६ |
| द्विगोर्वा | ५ । १ । ८६ | उ. | २३ | उ. | ० |
| द्विगौ क्रतौ | ६ । २ । ९७ | उ. | २३४ | उ. | ५५४ |
| द्विगौ प्रमाणे | ६ । २ । १२ | उ. | २०६ | उ. | ५३२ |
| द्वितीयतृतीयच० | २ । २ । ३ | पू. | १२६ | पू. | ३८६ |
| द्वितीयाटौस्वेनः | २ । ४ । ३४ | पू. | १६६ | पू. | ४७६ |
| द्वितीया ब्राह्मणे | २ । ३ । ६० | पू. | १५४ | पू. | ४५१ |
| द्वितीयायां च | ३ । ४ । ५३ | पू. | ३१४ | पू. | ० |
| द्वितीयायां च | ७ । २ । ८७ | उ. | ३६८ | उ. | ७८७ |
| द्वितीयाश्रितातीत० | २ । १ । २४ | पू. | १११ | पू. | ३६० |
| द्वितीये चानुपाख्ये० | ६ । ३ । ८० | उ. | २८२ | उ. | ६१३ |
| द्वित्रिचतुर्भ्यः सुच् | ५ । ४ । १८ | उ. | १०६ | उ. | ३७६ |
| द्वित्रिपूर्वादण् च | ५ । १ । ३६ | उ. | ११ | उ. | २४५ |
| द्वित्रिपूर्वान्निष्कात् | ५ । १ । ३० | उ. | १० | उ. | २४४ |
| द्वित्रिभ्यामञ्जलेः | ५ । ४ । १०२ | उ. | १२७ | उ. | ४०२ |
| द्वित्रिभ्यां ष मूर्ध्नः | ५ । ४ । ११५ | उ. | १३० | उ. | ४०५ |
| द्वित्रिभ्यां तयस्याय० | ५ । २ । ४३ | उ. | ४६ | उ. | २६८ |
| द्वित्रिभ्यां पाद्दन्मू० | ६ । २ । १९७ | उ. | २६० | उ. | ५७६ |
| द्वित्र्योश्च धमुञ् | ५ । ३ । ४५ | उ. | ८३ | उ. | ३४२ |
| द्विदण्ड्यादिभ्यश्च | ५ । ४ । १२८ | उ. | १३३ | उ. | ४०८ |
| द्विर्वचनेचि | १ । १ । ५६ | पू. | २५ | पू. | ११६ |
| द्विवचनविभज्यो० | ५ । ३ । ५७ | उ. | ८५ | उ. | ३४८ |
| द्विषत्परयोस्तापेः | ३ । २ । ३६ | पू. | २२६ | पू. | ६१६ |
| द्विषश्च | ३ । ४ । ११२ | पू. | ३२७ | पू. | ७५३ |
| द्विषोऽमित्रे | ३ । २ । १३१ | पू. | २४६ | पू. | ६५० |
| द्विस्तावात्रिस्तावा० | ५ । ४ । ८४ | उ. | १२३ | उ. | ४०० |
| द्विस्त्रिश्चतुरिति० | ८ । ३ । ४३ | उ. | ४३७ | उ. | ९८६ |
| द्वीपादनुसमुद्रं यञ् | ४ । ३ । १० | पू. | ४२४ | उ. | १६३ |
| द्वेस्तीयः | ५ । २ । ५४ | उ. | ५२ | उ. | ३०४ |
| द्वैपवैयाघ्रादञ् | ४ । २ । १२ | पू. | ३८४ | उ. | १२८ |
| द्व्यचः | ४ । १ । १२१ | पू. | ३६६ | उ. | १०५ |
| द्व्यचश्छन्दसि | ४ । ३ । १५० | पू. | ४५६ | उ. | ० |
| द्व्यचोऽतस्तिङः | ६ । ३ । १३५ | उ. | २६३ | उ. | ६२४ |

| | | काशिका | | पदमञ्जरी | |
|---|---|---|---|---|---|
| | अ. पा. सू. | | पृ. | | पृ. |
| न क्त्वा सेट्० | १ । २ । १८ | पू. | ३५ | पू. | १६१ |
| न क्रोडादिबह्वचः | ४ । १ । ५६ | पू. | ३४६ | उ. | ५५ |
| न क्त्वादेः | ७ । ३ । ५६ | उ. | ४२६ | उ. | ८२४ |
| नक्षत्राद्घः | ४ । ४ । १४१ | पू. | ४८६ | उ. | २२५ |
| *नक्षत्राद्वा | ८ । ३ । १०० | उ. | ५५२ | उ. | १०१० |
| नक्षत्रे च लुपि | २ । ३ । ४५ | पू. | १५० | पू. | ४४० |
| नक्षत्रेण युक्तः कालः | ४ । २ । ३ | पू. | ३८१ | उ. | १२४ |
| नक्षत्रेभ्यो बहुलं | ४ । ३ । ३७ | पू. | ४२६ | उ. | १६६ |
| नखमुखात्सं० | ४ । १ । ५८ | पू. | ३४७ | उ. | ५६ |
| न गतिहिंसार्थेभ्यः | १ । ३ । १५ | पू. | ५६ | पू. | २२७ |
| नगरात्कुत्सनप्रावी० | ४ । २ । १२८ | पू. | ४१७ | उ. | १५८ |
| न गुणादयो ऽवयवा | ६ । २ । १७६ | उ. | २५५ | उ. | ५७२ |
| न गोपवनादिभ्यः | २ । ४ । ६७ | पू. | १७८ | पू. | ४६० |
| नगो प्राणिष्वन्य० | ६ । ३ । ७७ | उ. | २८१ | उ. | ६१३ |
| न गोश्वन्साववर्ण० | ६ । १ । १८२ | उ. | १६४ | उ. | ५१४ |
| नङि संबुद्ध्योः | ८ । २ । ८ | उ. | ४६६ | उ. | ६३४ |
| नचवाहाहैवयुक्ते | ८ । १ । २४ | उ. | ४७२ | उ. | ६०० |
| नच्छन्दस्य पुत्रस्य | ७ । ४ । ३५ | उ. | ४४८ | उ. | ८५७ |
| नञ् | २ । २ । ६ | पू. | १२७ | पू. | ३६१ |
| नञः शुचीश्वरक्षेत्र० | ७ । ३ । ३० | उ. | ४१७ | उ. | ८१२ |
| नञस्तत्पुरुषात् | ५ । ४ । ७१ | उ. | ११६ | उ. | ० |
| नञो गुणप्रतिषेधे० | ६ । २ । १५५ | उ. | २५० | उ. | ५६७ |
| नञो जरमरमि० | ६ । २ । ११६ | उ. | २३८ | उ. | ५५७ |
| नञ्दुः सुभ्यो हलि० | ५ । ४ । १२१ | उ. | १३२ | उ. | ४०७ |
| नञ्सुभ्याम् | ६ । २ । १७२ | उ. | २५४ | उ. | ५७१ |
| नडशादाड्ड्वलच् | ४ । २ । ८८ | पू. | ४०७ | उ. | १४८ |
| नडादिभ्यः फक् । | ४ । १ । ६६ | पू. | ३५६ | उ. | ६७ |
| नडादीनां कुक्च | ४ । २ । ६१ | पू. | ४०८ | उ. | १४८ |
| न तिसृचतसृ | ६ । ४ । ४ | उ. | २६५ | उ. | ६२६ |
| नतेनासिकायाः सं० | ५ । २ । ३१ | उ. | ४५ | उ. | २६१ |
| न तौल्वलिभ्यः | २ । ४ । ६१ | पू. | १७५ | पू. | ४८६ |
| नदण्डमाणवान्ते | ४ । ३ । १३० | पू. | ४५२ | उ. | १८६ |
| न दधिपयआदीनि | २ । ४ । १४ | पू. | १६२ | पू. | ४६८ |
| नदीपौर्णमास्याग्र० | ५ । ४ । ११० | उ. | १२६ | उ. | ४०३ |
| नदी बन्धुनि | ६ । २ । १०६ | उ. | २३७ | उ. | ५५६ |

* एतस्य गणसूत्रत्वेन व्यवस्थापनं पदमञ्जर्याम्

| | अ॰ पा॰ सू॰ | काशिका | पृ॰ | पदमञ्जरी | पृ॰ |
|---|---|---|---|---|---|
| पुच्छभाण्डचीवरा० | ३ । १ । २० | पू. | १८८ | पू. | ५२५ |
| पुत्रः पुंभ्यः | ६ । २ । १३२ | उ. | २४२ | उ. | ५६० |
| पुत्राच्छ च | ५ । १ । ४० | उ. | १२ | उ. | २४७ |
| पुत्रान्तादन्यत० | ४ । १ । १५९ | पू. | ३७५ | उ. | ११४ |
| पुत्रेन्यतरस्याम् | ६ । ३ । २२ | उ. | २६६ | उ. | ० |
| पुमः खय्यम्परे | ८ । ३ । ६ | उ. | ५२८ | उ. | ९७५ |
| पुमान् स्त्रिया | १ । २ । ६७ | पू. | ५१ | पू. | २०८ |
| पुरा च परीप्सायाम् | ८ । १ । ४२ | उ. | ४७८ | उ. | ९०५ |
| पुराणप्रोक्तेषु ब्राह्म० | ४ । ३ । १०५ | पू. | ४४६ | उ. | १८५ |
| पुरि लुङ् चास्मे | ३ । २ । १२२ | पू. | २४४ | पू. | अशु॰ ६६० / शु॰ ६४४ |
| पुरुषश्चान्वादिष्टः | ६ । २ । १९० | उ. | २५८ | उ. | ५७४ |
| पुरुषहस्तिभ्यामण् च | ५ । २ । ३८ | उ. | ४७ | उ. | २९५ |
| पुरुषात्प्रमाणे ऽन्य० | ४ । १ । २४ | पू. | ३३६ | उ. | ३५ |
| पुरे प्राचाम् | ६ । २ । ९९ | उ. | २३४ | उ. | ० |
| पुरोऽग्रतोऽग्रेषु सर्तेः | ३ । २ । १८ | पू. | २२२ | पू. | ६१५ |
| पुरो ऽव्ययम् | १ । ४ । ६७ | पू. | ९५ | पू. | ३२३ |
| पुवः संज्ञायाम् | ३ । २ । १८५ | पू. | २५८ | पू. | ६६१ |
| पुषादिद्युताद्यॢदितः० | ३ । १ । ५५ | पू. | १९७ | पू. | ५६२ |
| पुष्करादिभ्यो देशे | ५ । २ । १३५ | उ. | ७२ | उ. | ३३० |
| पुष्यसिद्धौ नक्षत्रे | ३ । १ । ११६ | पू. | २१० | पू. | ५९८ |
| पूःसर्वयोर्दारिसहोः | ३ । २ । ४१ | पू. | २२७ | पू. | ६२० |
| पूगाञ्ञ्यो ऽग्रा० | ५ । ३ । ११२ | उ. | ९८ | उ. | ३६७ |
| पूगेष्वन्यतरस्याम् | ६ । २ । २८ | उ. | २१४ | उ. | ० |
| पूङः क्त्वा च | १ । २ । २२ | पू. | ३६ | पू. | १६४ |
| पूङश्च | ७ । २ । ५१ | उ. | २८८ | उ. | ० |
| पूङ्यजोः शानन् | ३ । २ । १२८ | पू. | ३४६ | पू. | अशु॰ ६६५ / शु॰ ६४९ |
| पूजनात्पूजितमनु० | ८ । १ । ६७ | उ. | ४८५ | उ. | ९१२ |
| पूजायां नानन्तरम् | ८ । १ । ३७ | उ. | ४७७ | उ. | ९०४ |
| पूतक्रतोरै च | ४ । १ । ३६ | पू. | ३३९ | उ. | ४१ |
| पूरणगुणसुहितार्थ० | २ । २ । ११ | पू. | १२८ | पू. | ३९५ |
| पूरणाद्भागे तीयादन् | ५ । ३ । ४८ | उ. | ८४ | उ. | ३४३ |
| पूरणार्धाट्ठन् | ५ । १ । ४८ | उ. | १४ | उ. | २४८ |
| पूर्णाद्विभाषा | ५ । ४ । १४९ | उ. | १३८ | उ. | ० |
| पूर्वकालैकसर्वजरत्पु० | २ । १ । ४९ | पू. | ११८ | पू. | ३७१ |
| पूर्वत्रासिद्धम् | ८ । २ । १ | उ. | ४८९ | उ. | ९२० |

* इदं सूत्रं १२६ पृ॰ अन्तिम ३ पङ्क्तौ रितीत्यस्याग्रे प्रत्ययलोपे इत्यस्य पूर्वमपेक्षितम् ।

* अत्र सूत्रे मतुबिति प्रमादपतितम् ।

* एतत्सूत्रस्थाने मन्त्रे घसह्वरणेति सूत्रं प्रमादतः पतितम् ।

* अत्र पङ्क्तिभेदोपेक्षितः सूत्रचिह्नं च ।

| | अ. पा. सू. | काशिका | पृ. | पदमञ्जरी | पृ. |
|---|---|---|---|---|---|
| समः सुटि | ८ । ३ । ५ | उ. | ५२७ | उ. | ६७४ |
| समयस्तदस्य० | ५ । १ । १०४ | उ. | २८ | उ. | २६४ |
| समयाच्चयापना० | ५ । ४ । ६० | उ. | ११७ | उ. | ३६३ |
| समर्थः पदविधिः | २ । १ । १ | पू. | १०३ | पू. | ३४३ |
| समर्थानां प्रथ० | ४ । १ । ८२ | पू. | ३५२ | उ. | ७० |
| समवप्रविभ्यः स्थः | १ । ३ । २२ | पू. | ५८ | पू. | २३१ |
| समवायान्समवैति | ४ । ४ । ४३ | पू. | ४६६ | उ. | २०७ |
| समवाये च | ६ । १ । १३८ | उ. | १८२ | उ. | ४६४ |
| समस्तृतीयायुक्तात् | १ । ३ । ५४ | पू. | ६७ | पू. | २४० |
| समांसमां विजायते | ५ । २ । १२ | उ. | ४० | उ. | २८५ |
| समानकर्तृकयोः पूर्व० | ३ । ४ । २१ | पू. | ३०७ | पू. | ७२३ |
| समानकर्तृकेषु तुमुन् | ३ । ३ । १५८ | पू. | २९६ | पू. | ७०८ |
| समानतीर्थे वासी | ४ । ४ । १०७ | पू. | ४८२ | उ. | २१६ |
| समानस्य छन्द० | ६ । ३ । ८४ | उ. | २८२ | उ. | ६१४ |
| समानोदरे श० | ४ । ४ । १०८ | पू. | ४८२ | उ. | २२० |
| समापनात्सपूर्व० | ५ । १ । ११२ | उ. | ३० | उ. | ० |
| समायाः खः | ५ । १ । ८५ | उ. | २३ | उ. | २६० |
| समासत्तौ | ३ । ४ । ५० | पू. | ३१३ | पू. | ७३३ |
| समासस्य | ६ । १ । २२३ | उ. | २०४ | उ. | ५२५ |
| समासाच्च तद्वि० | ५ । ३ । १०६ | उ. | ९७ | उ. | ३६७ |
| समासान्ताः | ५ । ४ । ६८ | उ. | ११८ | उ. | ३६५ |
| समासेऽङ्गुलेः सङ्गः | ८ । ३ । ८० | उ. | ५४८ | उ. | १००५ |
| समासेऽनञ्पूर्वे० | ७ । १ । ३७ | उ. | ३४६ | उ. | ७१५ |
| समाहारः स्वरितः | १ । २ । ३१ | पू. | ३६ | पू. | १७० |
| समि ख्यः | ३ । २ । ७ | पू. | २२० | पू. | ० |
| समि मुष्टौ | ३ । ३ । ३६ | पू. | २६७ | पू. | ६७५ |
| समि युद्रुदुवः | ३ । ३ । २३ | पू. | २६५ | पू. | ६७३ |
| समुच्चयेऽन्यतरस्याम् | ३ । ४ । ३ | पू. | ३०२ | पू. | ७१८ |
| समुच्चये सामान्यव० | ३ । ४ । ५ | पू. | ३०३ | पू. | ७१६ |
| समुदाङ्भ्यो० | १ । ३ । ७५ | पू. | ७२ | पू. | २४६ |
| समुदो रजः पशुषु | ३ । ३ । ६९ | पू. | २७४ | पू. | ० |
| समुद्राभ्राद् घः | ४ । ४ । ११८ | पू. | ४८४ | उ. | २२१ |
| समूलाकृतजीवे० | ३ । ४ । ३६ | पू. | ३१० | पू. | ७३१ |
| समूहवच्च बहुषु | ५ । ४ । २२ | उ. | १०७ | उ. | ३८० |
| समो गम्यृच्छिप्रच्छि० | १ । ३ । २९ | पू. | ६० | पू. | २३३ |
| संपरिपूर्वात्ख च | ५ । १ । ६२ | उ. | २५ | उ. | ० |
| संपर्युपेभ्यः करोतौ भू० | ६ । १ । १३७ | उ. | १८१ | उ. | ४६४ |

| | अ. पा. सू. | काशिका पृ. | | पदमञ्जरी पृ. | |
|---|---|---|---|---|---|
| संपादिनि | ५ । १ । ९९ | उ. | २७ | उ. | २६४ |
| संपृचानुरुधा० | ३ । २ । १४२ | पू. | २४९ | पू. | ६५३ |
| संप्रतिभ्यामना० | १ । ३ । ४६ | पू. | ६५ | पू. | २३८ |
| संप्रसारणस्य | ६ । ३ । १३९ | उ. | २९४ | उ. | ६२४ |
| संप्रसारणाच्च | ६ । १ । १०८ | उ. | १७४ | उ. | ४७९ |
| संप्रोदश्च कटच् | ५ । २ । २९ | उ. | ४४ | उ. | २९० |
| संबुद्धौ च | ७ । ३ । १०६ | उ. | ४३७ | उ. | ० |
| संबुद्धौ शाक० | १ । १ । १६ | पू. | १० | पू. | ६७ |
| संबोधने च | २ । ३ । ४७ | पू. | १५१ | पू. | ४४५ |
| संबोधने च | ३ । २ । १२५ | पू. | २४५ | पू. | अशु. ६६३ / शु. ६४७ |
| संभवत्यवहर० | ५ । १ । ५२ | उ. | १५ | उ. | २४९ |
| संभावनेलमिति० | ३ । ३ । १५४ | पू. | २९५ | पू. | ७०६ |
| संभूते | ४ । ३ । ४१ | पू. | ४३० | उ. | १७१ |
| संमाननोत्संजना० | १ । ३ । ३६ | पू. | ६२ | पू. | २३५ |
| संयसश्च | ३ । १ । ७२ | पू. | २०० | पू. | ५६७ |
| संयोगादिश्च | ६ । ४ । १६६ | उ. | ३३७ | उ. | ६९६ |
| सरूपाणामेकशे०. | १ । २ । ६४ | पू. | ५० | पू. | २०० |
| सर्तिशास्त्यर्तिभ्य० | ३ । १ । ५६ | पू. | १९७ | पू. | ५६२ |
| सर्वकूलाभ्रकरीषेषु० | ३ । २ । ४२ | पू. | २२७ | पू. | ० |
| सर्वं गुणकार्त्स्न्ये | ६ । २ । ९३ | उ. | २३३ | उ. | ५५३ |
| सर्वचर्मणः कृतः० | ५ । २ । ५ | उ. | ३८ | उ. | २८२ |
| सर्वत्र लोहितादि० | ४ । १ । १८ | पू. | ३३४ | उ. | ३१ |
| सर्वत्र विभाषा गोः | ६ । १ । १२२ | उ. | १७७ | उ. | ४८४ |
| सर्वत्र शाकल्यस्य | ८ । ४ । ५१ | उ. | ५७१ | उ. | १०३३ |
| सर्वत्राण् च त० | ४ । ३ । २२ | पू. | ४२६ | उ. | १६५ |
| सर्वदेवात्तातिल् | ४ । ४ । १४२ | पू. | ४८९ | उ. | ० |
| सर्वनामस्थाने चासं० | ६ । ४ । ८ | उ. | २९६ | उ. | ६३० |
| सर्वनाम्नः स्मै | ७ । १ । १४ | उ. | ३४४ | उ. | ७०६ |
| सर्वनाम्नः स्याड्० | ७ । ३ । ११४ | उ. | ४३९ | उ. | ६४२ |
| सर्वनाम्नस्तृतीया० | २ । ३ । २७ | पू. | १४५ | पू. | ४३३ |
| सर्वपुरुषाभ्यां णढ० | ५ । १ । १० | उ. | ४ | उ. | २३३ |
| सर्वभूमिपृथि० | ५ । १ । ४१ | उ. | १२ | उ. | २४७ |
| सर्वस्य द्वे | ८ । १ । १ | उ. | ४६३ | उ. | ८७५ |
| सर्वस्य सुपि | ६ । १ । १९१ | उ. | १९७ | उ. | ५१९ |
| सर्वस्य सोऽन्यत० | ५ । ३ । ६ | उ. | ७५ | उ. | ३३४ |
| सर्वादीनि सर्वना० | १ । १ । २७ | पू. | १३ | पू. | ७५ |

| | | काशिका | | पदमञ्जरी | |
|---|---|---|---|---|---|
| | अ॰ पा॰ सू॰ | | पृ॰ | | पृ॰ |
| सौ च | ६ । ४ । १३ | उ॰ | २६८ | उ. | ० |
| स्कोः संयोगाद्योरन्ते॰ | ८ । २ । २९ | उ॰ | ४०३ | उ. | ९४३ |
| स्तन्भेः | ८ । ३ । ६७ | उ॰ | ४४५ | उ. | १००४ |
| स्तम्बस्तुम्भुस्कम्भु॰ | ३ । १ । ८२ | पू॰ | २०१ | पू. | ५७० |
| स्तम्बकर्णयोरमिजपोः | ३ । २ । १३ | पू॰ | २२१ | पू. | ६१४ |
| स्तम्बशकृतोरिन् | ३ । २ । २४ | पू॰ | २२४ | पू. | ६१७ |
| स्तम्बे क च | ३ । ३ । ८३ | पू॰ | २७७ | पू. | ६८३ |
| स्तम्भुसिवुसहां॰ | ८ । ३ । ११६ | उ॰ | ४५६ | उ. | १०१३ |
| स्तुतस्तोमयोश्छन्दसि | ८ । ३ । १०५ | उ॰ | ४५३ | उ. | १०११ |
| स्तुसुधूञ्भ्यः परस्मै॰ | ७ । २ । ७२ | उ॰ | ३६४ | उ॰ | ० |
| स्तेनाद्यन्नलोपश्च | ५ । १ । १२५ | उ॰ | ३४ | उ॰ | २७८ |
| स्तोः श्चुना श्चुः | ८ । ४ । ४० | उ॰ | ४६८ | उ. | १०३० |
| स्तोकान्तिकदूरार्थ॰ | २ । १ । ३९ | पू॰ | ११५ | पू. | ० |
| स्तौतिण्योरेव षण्य॰ | ८ । ३ । ६१ | उ॰ | ४४२ | उ. | ९९८ |
| स्त्यः प्रपूर्वस्य | ६ । १ । २३ | उ. | १४६ | उ॰ | ४३२ |
| स्त्रियाः | ६ । ४ । ७९ | उ॰ | ३१५ | उ॰ | ६७० |
| स्त्रियाः पुंवद्भाषित॰ | ६ । ३ । ३४ | उ॰ | २६८ | उ॰ | ५८८ |
| स्त्रियाम् | ४ । १ । ३ | पू॰ | ३३० | उ॰ | १२ |
| स्त्रियां संज्ञायाम् | ५ । ४ । १४३ | उ॰ | १३६ | उ॰ | ४१० |
| स्त्रियां क्तिन् | ३ । ३ । ९४ | पू॰ | २७८ | पू॰ | ६८४ |
| स्त्रियां च | ७ । १ । ९६ | उ॰ | ३६६ | उ॰ | ७४२ |
| स्त्रियामवन्तिकु॰ | ४ । १ । १७६ | पू. | ३८० | उ. | १२२ |
| स्त्रीपुंवच्च | १ । २ । ६६ | पू. | ५१ | पू. | २०७ |
| स्त्रीपुंसाभ्यां नञ्स्न॰ | ४ । १ । ८७ | पू. | ३५४ | उ. | ७८ |
| स्त्रीभ्यो ढक् | ४ । १ । १२० | पू. | ३६४ | उ. | १०५ |
| स्त्रीषु सौवीरसाल्व॰ | ४ । २ । ७६ | पू. | ४०१ | उ. | ० |
| स्थः क च | ३ । २ । ७७ | पू. | २३५ | पू. | ६२८ |
| स्थण्डिलाच्छयि॰ | ४ । २ । १५ | पू. | ३८५ | उ. | १२९ |
| स्थागापापचो भावे | ३ । ३ । ९५ | पू. | २७९ | पू | ६८५ |
| स्थाघ्वोरिच्च | १ । २ । १७ | पू. | ३५ | पू. | १६० |
| स्थादिष्वभ्यासेन॰ | ८ । ३ । ६४ | उ. | ४४३ | उ. | १००० |
| स्थानान्तगोशाल॰ | ४ । ३ । ३५ | पू. | ४२९ | उ. | १९९ |
| स्थानान्ताद्विभाषा | ५ । ४ । १० | उ. | २०४ | उ. | ३७४ |
| स्थानिवदादेशोन॰ | १ । १ । ५६ | पू. | २२ | पू. | १०३ |
| स्थानेऽन्तरतमः | १ । १ । ५० | पू. | २० | पू. | ९६ |
| स्थालीबिलात् | ५ । १ । ७० | उ. | २० | उ. | २५७ |
| स्थूलदूरयुवह्रस्व॰ | ६ । ४ । १५६ | उ. | ३३४ | उ. | ६९४ |

समाप्तं चेदं काशिकापदमञ्जर्याः सूचीपत्रम् ॥ शुभं भवतु ॥

श्रीगणपतयेनमः ॥

# काशिकाव्याख्या पदमञ्जरी।

"ङ्याप्प्रातिपदिकात्"॥ 'अधिकारोयमिति'। विधेयपरिभाष्ययोरनिर्द्देशादुच्यमानानां च स्वादीनां प्रकृत्यपेक्षत्वात्स्वरितत्वाच्च 'आ पञ्चमाध्यायपरिसमाप्तेरिति'। अधिकारस्यावधिं दर्शयति। अधिकारोनेकप्रकारः संज्ञाधिकारो विशेषणाधिकारः प्रकृत्यधिकारश्चेति, तत्र कीदृशोयमधिकार इत्यत आह। 'स्वादिषु कप्पर्यन्तेषु प्रकृतिरधिक्रियतइति'। 'टाब्ङाप्चापां चावितीति'। सामान्यग्रहणमित्यनुषङ्गः। 'समाहारनिर्द्देश इति'। समाहारद्वन्द्वेन तेषां ङ्यादीनामयं निर्द्देश इत्यर्थः। ततश्च समाहारस्यैकत्वादेकवचनमेव युक्तं न बहुवचनमिति भावः। किमर्थमिदमुच्यते ङ्याप्प्रातिपदिकात्परे स्वादयो यथा स्युरिति केवलानां प्रयोगो मा भूत्, परश्चेति वचनात्केवलानां प्रयोगो न भविष्यति, इदं तर्हि प्रयोजनं ङ्याप्प्रातिपदिकादेव यथा स्युरिति प्रकृत्यन्तरान्मा भूवन्, असति ह्यस्मिन्नधिकारे धातुस्तिङन्तं वाक्यं सुबन्तं चेति ङ्याप्प्रातिपदिकव्यतिरिक्तापि चतुर्विधा प्रकृतिरस्ति, वक्ष्यमाणाश्च प्रत्ययाश्चतुर्विधाः स्वादयष्टाबादयोऽणादयः स्वार्थिकाश्चेति, तदिह चतुर्विधाभ्यः प्रकृतिभ्यश्चतुर्विधाः प्रत्यया मा भूवन्निति कर्त्तव्य एवायमधिकारः, न कर्त्तव्यः। ननु चासत्यस्मिन् धात्वधिकाराद्धातोरेव स्युः कृदुपपदसंज्ञे च स्यातां वासरूपविधिश्च स्यात्। न, निवृत्तत्वाद्धातुग्रहणस्य, यद्वि परं धातोरपि स्युः, तदपि न, कर्मादीनामभावात्। कर्मादिषु च कारकेष्वेकत्वादिकायां च संख्यायां स्वादयो विधीयन्ते, न च धात्वर्थस्य कर्मादिभिर्योगः सम्भवति, कथं तर्हि कर्मणि तव्यदादयो भवन्ति, नैव धात्वर्थस्य कर्मत्वे तव्यदादयो भवन्ति किं तर्हि धात्वर्थं प्रति यत्कर्म तस्मिन्वाच्ये कर्त्तव्यः कट इति,स्वादयस्तु प्रकृत्यर्थस्य कर्मत्वे चरितार्था नान्यस्य कर्मत्वे भवितुमर्हन्ति, तव्यदादिभिश्च बाधितत्वादितोः स्वादीनामभावः। ननु च

धात्वर्थस्यैव कर्मत्वं दृष्टं, सन्प्रकृतौ चिकीर्षतीत्यादौ, एवमपि संख्याभावः सिद्ध एव, अव्ययेभ्यस्त्व अयाद्वाप्सुप इति ज्ञापकात्स्वादयो भवन्ति, यत्तु नवं-हुषु बहुवचनमित्यत्रोक्तं यत्र च संख्या सम्भवतीति तदस्यां दशायां तथा नाश्रीयते, टाबादयस्तर्हि धातोर्मा भूवन्निति, स्त्रियां टाबादयो विधी-यन्ते, न च धात्वर्थस्य स्त्रीत्वेन योगोस्ति, कथं तर्हि स्त्रियां क्तिन्नादयो विधीयन्ते, नैवात्र धात्वर्थस्य स्त्रीत्वे क्तिन्नादयः स्मर्यन्ते, कस्य तर्हि, यस्तस्य सिद्धत्वं नाम धर्मस्तस्य, क्तिन्नादिभिश्च बाधितत्वाट्टाबादीना-मभावः । अणादयस्तर्हि धातोर्मा भूवन्निति । अपत्यादिष्वर्थेष्वणादयो विधीयन्ते न च धात्वर्थस्यापत्यादिभिर्योगोस्ति, समर्थविभक्त्यभावाच्चा-णादीनामनुत्पत्तिः, तस्यापत्यं, तेन रक्तं, तत्र भव, इत्येवमादिभिः षष्ठ्यादि-विभक्त्यन्तादणादयो विधीयन्ते, न च धातोर्विभक्तिः सम्भवति, स्वार्थिका अपि स्वार्थिकैस्तुमुन्नादिभिर्बाधितत्वादेव धातोर्न भविष्यन्ति, तिङन्ता-त्तर्हि स्वादयो मा भूवन्निति, तिङन्तेषु क्रिया प्रधानभूता साधनं गुणभूतं, तत्र प्रधानभूतायाः क्रियायाः कर्मादीनामभावात्स्वादयो न भविष्यन्ति । पचति भवति, भवति वै किञ्चिदाचार्याः क्रियमाणमपि चोदयन्ती-त्यादौ कर्तृत्वं दृष्टमिति चेत्, एवमपि संख्याया अभावः सिद्ध एव, यस्तु गुणभूतः कर्ताभिधीयते तत्राभिहितत्वादेव विभक्त्यभावः सिद्धः, न च गुण-भूतस्य कर्तुः क्रियान्तरावेशः सम्भवति, यतः पाचकं पश्येत्यादिवद् द्विती-यादयो भवेयुः । ननु पुत्रीयवदेतत्स्यात्, तद्यथा, पुत्रीयशब्दादन्तर्भूत-क्रियाकर्मवाचिनः कर्तरि लकार उत्पद्यते पुत्रीयतीति, तथेहापि पचतिशब्दात्कर्तृविशिष्टक्रियावाचिनः कर्मादिषु द्वितीयादयः स्युरेव, नैष दोषः । उक्तमेतत्, प्रकृत्यर्थस्य कर्मत्वे चरितार्थाः स्वादयो नान्यस्य कर्मत्वे भवितुमर्हन्तीति, न चैकक्रियापेक्षयोर्भिन्नयोः साधनयोरेकस्मिन्पदे युगपदभिधानं सम्भवति, पुत्रीयशब्दस्तु जीवत्यादिधातुवद्विशिष्टक्रिया-वचन इति ततः कर्तरि लकारोत्पत्तिरविरुद्धा, अवश्यं चैतदेवं विज्ञेयम्, अर्थाभावादेव तिङन्ताद्द्वितीयादयो न भवन्तीति । यो हि मन्यते ङ्याप्प्रा-तिपदिकाधिकाराच्च भवन्तीति रूपवाद्यन्तात्तस्य द्वितीयादयः स्युरेव पच-

तिरूपं पश्य पचतिरूपेण कृतमित्यादि, भवति ह्येतत्प्रातिपदिकं, कथं तर्हि रूपबाद्यन्तात्प्रथमैकवचनमपि भवति उक्तत्वात्सङ्ख्यायाः, न हि तत्कर्त्तुः सङ्ख्यायामेकवचनं यदि तथा स्यात् पचतोरूपं पचन्तिरूपमिति द्विवचन-वहुवचने स्यातां, प्रातिपदिकार्थेत्यत्र तु प्रातिपदिकग्रहणात्प्रातिपदिक-मात्रानुबन्धिनी प्रथमा भवति तत्राप्येकवचनमेव, एकवचनमुत्सर्गः करिष्यतइति वचनात्। न चैवं तिङन्तेऽपि प्रसङ्गः, तस्याप्रातिपदिक-त्वात्। टाबादयस्तर्हि तिङन्तान्माभूवन्निति, स्त्रियां टाबादयो विधी-यन्ते, न च तिङन्ते प्रधानस्यार्थस्य स्त्रीत्वेन योगोस्ति, यदि परं साध-नस्य स्त्रीत्वे टाबादयः स्युः पचेद्ब्राह्मणी पचेरन् ब्राह्मण्य इति, तदपि न, स्वभावतो हि तिङन्तानि साधनाश्रयां सङ्ख्यामेवोपाददते न लिङ्गम्। उक्तं च॥

एकत्वेपि क्रियाख्याते साधनाश्रयसंख्यया।
भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रयः॥

इति। शोभनं पचतीत्यादौ क्रियाविशेषणस्यैव लिङ्गेन योगो न क्रियायास्तत्रापि नपुंसकेन। पचतिरूपमित्यादावपि रूपबाद्यन्तवाच्यायाः क्रियायाः स्वभावतो लिङ्गेन योगस्तत्रापि नपुंसकेन, विचित्रा हि शब्दानां शक्तयो यथादर्शनमभ्युपगन्तव्याः, न सामान्यतो दृष्टेनानुमानेन व्यव-स्थापयितुं शक्यन्ते। अवश्यं चैतदेवं विज्ञेयं स्त्रीत्वाभावात्तिङन्ताट्टाबा-दयो न भवन्तीति, अन्यथा पचतिरूपं ब्राह्मणीत्यादौ रूपबाद्यन्ताट्टा-प्स्यादेव, अणादयस्तर्हि तिङन्तान्माभूवन्निति, अपत्यादिष्वर्थेष्वणादयो विधीयन्ते, न च तिङन्ते प्रधानस्यापत्यादिभिर्योगोस्ति। अप्रधानस्य त्व-प्रधानत्वादेवापत्यादिभिर्योगाभावः, समर्थविभक्त्यभावाच्चाणाद्यभावः सिद्धः, अवश्यं चैतदेवं विज्ञेयम्, अन्यथा यः पचतिरूपं तस्यापत्यमिति रूपबाद्यन्तादणादयः स्युरेव, स्वार्थिका अपि ज्ञापकात्तिङन्तान्न भवि-ष्यन्ति यदयं क्व चित्तद्धितविधौ तिङ्ग्रहणं करोति अतिशायने तमबि-ष्ठनौ तिङश्चेति, वाक्यादपि नैव स्वादयो भवितुमर्हन्ति कर्मादीना-मभावात्। न खलु क्रियारूपस्य संसर्गरूपस्य भेदरूपस्य वा वाक्यार्थस्य कर्मादिभिः स्त्रीत्वेनापत्यादिभिर्वा योगः सम्भवति। पश्य मृगो धावती-

त्यादौ दृष्टमिति चेदेवमपि संख्यायोगाभावः सिद्धः, स्वार्थिका अप्यभिधानाभावान्न वाक्याद्भविष्यन्ति। तथाहि। देवदत्तारोहाश्वमित्यस्माद्वाक्यात्प्रागिवीयेष्वर्थेषु के सुब्लुकि च कृते वाक्यार्थस्यासत्त्वभूतत्वाद्व्यक्तिलिङ्गसङ्ख्यायोगाभावात्स्वाद्युत्पत्तेरभावाद्देवदत्तारोहाश्वकेति भवितव्यम्, न चैवंभूतेन वाक्यार्थगताः कुत्सादयो गम्यन्तइति, सुबन्तादपि नैव स्वादयो भवितुमर्हन्ति नहि स्वादिषु विधीयमानेषु तदन्ता प्रकृतिः सम्भवति, यथोक्तं, सनन्ताच्चनिष्यतइति, किं च सुबन्तमपि सङ्ख्याप्रधानं कारकशक्तिप्रधानं वा, न चास्यापरैः कर्मादिभिर्योगः सम्भवति, टाबादयोऽपि स्त्रीत्वाभावाच्च भविष्यन्ति। अणादिषु पुनर्नास्ति विशेषः सुबन्ताद्वोत्पत्तौ सत्यां प्रातिपदिकाद्वा, यथा चैतत्तथा समर्थानां प्रथमाद्वेत्यत्र प्रतिपादयिष्यामः, सर्वथा रूपबाह्यन्तात्प्रातिपदिकादप्यनिष्टः प्रत्ययो यद्वत् तद्वद्वा-स्वादिकादपीति नार्थ एतेनेत्याक्षेप्ता शङ्कते तावत्। 'यद्यपीति'। 'प्रत्ययपरत्वेन[१] प्रकृतिर्लभ्यते,' पारिशेष्याच्चेयमेव प्रकृतिर्लभ्यतइत्यर्थः। परिहरति। 'तथापीति'। वृद्धादयो लक्षणं निमित्तं यस्य प्रत्ययविधेस्तत्र ङ्याप्प्रातिपदिकस्य विशेष्यत्वेन सम्प्रत्ययो यथा स्यादित्येवमर्थमित्यर्थः। 'इतरथा हीति'। यदि ङ्याप्प्रातिपदिकग्रहणं न क्रियेतेत्यर्थः। 'समर्थविशेषणमेतत्स्यादिति'। समर्थानां प्रथमाद्वेत्यधिकारात्। किं च समर्थं सुबन्तं, समर्थविशेषणे सति को दोषः, उदीचां वृद्धादगोत्रादिति फिन् इह च प्रसज्येत ग्लानां ब्राह्मणानामपत्यमिति एतद्धि समर्थं वृद्धम्, इह च न स्यात् ग्लयोर्ब्राह्मणयोरपत्यमिति नह्येतत्समर्थं वृद्धम्। अवृद्ध। प्राचामवृद्धात्फिन् बहुलमिह च प्रसज्येत ग्लयोर्ब्राह्मणयोरपत्यमिति, एतद्धि समर्थमवृद्धम्। इह च न स्यात् ग्लानां ब्राह्मणानामपत्यमिति, नह्येतत्समर्थमवृद्धं, यत्र ह्यादेशादिवशेन सङ्ख्याविशेषाभिव्यक्तिर्भवति न भवति तत्र द्विवचनबहुवचनान्तानामपि वृत्तिस्तावको मामक इति, यथा इह च फिञुत्पद्यमानो बहुत्वमन्तरेण वृद्धत्वानुपपत्तेर्बहुत्वं गमयेत्, एवं फिन्नपि द्वित्वमिति स्यादेवायं प्रसङ्गः, अवर्ण। अत इञ्. इहैव स्यात्

१ पारिशेष्यादियमेवेति मुद्रितमूलपुस्तके पाठस्तु पदमञ्जर्यसंमतः।

दक्षस्यापत्यमिति, दक्षयोर्दक्षाणामित्यत्र तु न स्यात्। स्वर। अनुदात्तादेरञ्, इह च प्रसज्येत वाचो विकारः त्वचो विकारः, एतद्धि समर्थमनुदात्तादि सावेकाचइति विभक्तेरुदात्तत्वात्, नन्वत्रैकाचो नित्यं मयटमिच्छन्तीति मयटा भाव्यम्, इदं तर्हि पञ्चानां विकार इति षड्त्रिचतुर्भ्यो हलादिरिति विभक्तेरुदात्तत्वे सति समर्थमनुदात्तादि, प्रातिपदिकं तु नः सङ्ख्याया इत्याद्युदात्तम्, इह च न स्यात् सर्वेषां विकार इति, सर्वस्य सुपीत्याद्युदात्तं पदं प्रातिपदिकं त्वन्तोदात्तं निपातितम्। द्व्यच्। नौद्व्यचष्ठन् इह च प्रसज्येत वाचा तरति त्वचा तरति, एतद्धि समर्थं द्व्यच्, नौग्रहणं तु नियमार्थं स्यात् औकारान्ताद्यदि भवति नौशब्दादेवेति, इह च न स्यात् घटेन तरतीति, साम्ना तरतीत्यादौ पुनरुभयथापि सिद्धं ङ्याप्प्रातिपदिकग्रहणे तु सति तत्सामर्थ्यात्तस्यैव विशेषणं वृद्धादि भवति समर्थाधिकाराच्च समर्थात्प्रत्ययः, तत्रैवमभिसम्बन्धः, वृद्धादि यन्ङ्याप्प्रातिपदिकं तस्मात्समर्थात्प्रत्यय इति, यस्मात्प्रत्ययविधिरिति प्रत्ययविधौ पञ्चमीनिर्दिष्टस्य विधीयमाना अङ्गभपदसंज्ञा ङ्याप्प्रातिपदिकस्य यथा स्युरित्येतत्तु प्रयोजनं न भवति, कथं दैवेन हि जानता यतः प्रत्ययो विहितस्तस्यैताः संज्ञाः पञ्चम्या निर्दिश्यतां मा वा निर्देशि, इह च कंसीयपरशव्ययोर्यञञौ लुक्चेति प्रातिपदिकात्परयोश्छयतोर्लुग्यथा स्यादौणादिकयोरुकारसशब्दयोर्मा भूदित्येतदपि न प्रयोजनं, कथम्, उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि, उणादिषु नावश्यं व्युत्पत्तिकार्यं भवतीत्यर्थः। एतच्चातः कृकमिकंसेत्यत्र कमिग्रहणेनैव सिद्धे पुनः कंसग्रहणाद्विज्ञायते, तस्माद् वृद्धाद्येव प्रयोजनमधिकारस्य। ङ्याब्ग्रहणं क्रियते प्रत्ययान्तत्वेनाप्रातिपदिकत्वात्, यूनस्तिः युवतिरित्यस्य तु तद्धितान्तत्वात्प्रातिपदिकत्वम्, ऊङुत इत्युवर्णान्तादूङ् विधीयते तत्रैकादेशस्यान्तवद्भावात्प्रातिपदिकत्वं, श्वशुरस्योकाराकारलोपश्चेति श्वश्रूरित्यत्र श्वशुरः श्वश्र्वेश्चेति निपातनाद्विभक्त्यादिसिद्धिः, एवं स्थिते चोद्यम्। 'अर्थेति' 'न प्रातिपदिकग्रहणादिति'। नञः काक्वा प्रयोगात्सिद्धमेवेत्यर्थः। अनेकार्थत्वाद्वा निपातानाम्। ननु शब्दस्यार्थे नशब्दो द्रष्टव्यः। 'लिङ्गविशिष्टस्येति'। लिङ्गनिमित्तप्रत्ययेना-

धिकस्येत्यर्थः । अस्याश्च परिभाषायाः प्रयोजनं सर्वनामस्वरसमासोपचारे-
ष्ठुवद्भावाः । सर्वनाम । भवच्छब्दस्य विधीयमाना सर्वनामसंज्ञा भवतीशब्द-
स्यापि भवति, सर्वनाम्नस्तृतीया च, भवता हेतुना भवतो हेतोर्भवत्या हेतुना
भवत्या हेतोरिति । स्वर । कुशूलकूपकुम्भशालं बिले, कुशूलबिलं कुशूली-
बिलम् । समास । पूर्वसदृश । मातृसदृशः मातृसदृशी । सदृशप्रतिरूप-
योरिति स्वरोप्यत्र भवति, तथा कुमारः श्रमणादिभिः कुमारी श्रमणा,
कुमारश्रमणा, एवं युवतिर्वलिना युवबलिना । उपचार । अतः कृकमिकं-
सकुम्भ । अयस्कम्भः अयस्कुम्भी । इष्टवद्भाव । णाविष्ठवत्प्रातिपदिकस्य,
कुमारीमाचष्टे कुमारयति, इह त्वचित्तहस्तिधेनोष्ठक् हस्तिनीनां समूहो
हास्तिकमिति, भस्याढे तद्धिते इति पुंवद्भावेन ङीपि निवृत्ते हस्तिशब्द
एवायमिति ठक्सिद्धिः, तद्धितइत्येषा हि विषयसप्तमी, अवश्यं च पुंव-
द्भाव एवाश्रयणीयः, अन्यथा हस्तिनीशब्दाट्ठकि यस्येतिलोपस्य स्थानिव-
द्भावाचस्तद्धितइति टिलोपो न स्यात्, इह च नेन्सिद्धबध्नातिषु च स्थण्डि-
लशायिनीति गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्प-
त्तेरिति वचनादनुत्पन्नएव ङीपि समासे सतीन्नन्तमेवोत्तरपदमित्यलुक्-
प्रतिषेधः सिद्धः, एवं शयवासवासिष्वकालात् ग्रामेवासिनीत्यलुक्, तथा
क्यङ्मानिनोश्च स्वाङ्गाच्चेतोमानिनि दर्शनीयमानिनी दीर्घमुखमानिनी
मानिन्शब्द एवोत्तरपदमिति पुंवद्भावः सिद्धः । इह च तृजकाभ्यां कर्त्तरि
कर्त्तरि चेति कर्त्तरि यौ तृजकौ ताभ्यां योगे या षष्ठी तस्या येनयेन
सह समासः प्राप्तः स सर्वो न भवतीति विज्ञानादपां स्रष्ट्रीत्यत्रापि
समासनिषेधः सिद्धः । यदि प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं
भवति अतिप्रसङ्गो भवति द्विषत्परयोस्तापेः द्विषतीताप इत्यत्रापि
स्यात् । उक्तमत्र द्विषत्परयोरिति द्वितकारकोयं निर्द्देशः तकारान्तो
द्विषच्छब्दइति, इह च गार्ग्या अपत्यं दाक्ष्या अपत्यमिति यञिञोश्चेति
फकं परत्वात्स्त्रीभ्यो ढग्बाधते, इह च ञ्नित्यादिर्नित्यं दाक्षिः ग्लुचुका-
यनिरित्यस्यामवस्थायामाद्युदात्तत्वे कृते पश्चादितो मनुष्यजातेरिति ङीषि
सति शिष्टः प्रत्ययस्वर एव भवति दाक्षी ग्लुचुकायनी, न चास्यामव-

स्यायामाद्युदात्तत्वं पुनः प्रवर्त्तते पूर्वमेव प्रवृत्तत्वात्, तथा बहवो गोमन्तोऽस्यां बहुगोमतीति प्रागेव बहुस्वरे प्रवृत्ते पश्चान्ङीप् पित्त्वादनुदात्तो भवति, न च पुनरपि बहोर्नञ्वदित्यस्य प्रवृत्तिः पूर्वमेव प्रवृत्तत्वात्समासाच्चात्र ङीबुत्पन्न इत्युत्तरपदं न लिङ्गविशिष्टम्, इह तर्हि राजाहःसखिभ्यष्टच् मद्राणां राज्ञीति टच् स्यात् ततश्च भस्याढेतद्धित इति पुंवद्भावेन ईकारे निवृत्ते टिलोपे च टित्त्वान्ङीपि मद्रराजीति स्यान्मद्रराज्ञीति चेष्यते, तथा महती प्रिया यस्य महतीप्रिय इति पुंवद्भावप्रतिषेधविषये आन्महत इत्यात्वं स्यात् तथाऽऽर्या ब्राह्मणकुमारयोः, राजा च राजब्राह्मणीत्यत्रापि स्यात्, तथा विभक्त्याश्रयं यत्कार्यं विभक्तौ परतो विभक्तेर्वा तत्रापि दोषो यथा न गोश्वन्साववर्णेति, शुना शुन इत्यत्र सावेकाच इति प्राप्तं विभक्तेरुदात्तत्वं न भवति, तथा गौरादिङीषन्तात् शुन्या शुन्यै इत्यादावप्युदात्तयणो हल्पूर्वादित्यस्यापि निषेधः स्यात्, उगिदचामिति नुम् गोमतीन्यादावपि स्यात्, चतुरनडुहोराम् अनडुहीत्यत्रेकारात्परः स्यात्, पथिमथ्यृभुक्षामात् शोभनः पन्था अस्यामिति न पूजनादिति समासान्ते निषिद्धे ऋन्नेभ्यो ङीपि भस्य टेर्लोपे सुपथीत्यत्रापि स्यात्, अङ्गाधिकारे तदन्तस्यापि ग्रहणात्सुपन्थादीतिव,त्पुंसोऽसुङ् सुपुंसीत्यत्रापि स्यात्, शोभनाः पुमांसोऽस्यामिति, उरःप्रभृतिषु पुमानिति विभक्त्यन्तस्य पाठादेकवचनान्तादेव नित्यं कप् भवति बहुवचनान्तस्य तु शेषाद्विभाषेति विकल्पित एवेति कबभावपक्षे पूङो ह्रस्वः मसुश्च प्रत्ययः, अकार उच्चारणार्थः, तत्र प्रत्ययस्योगित्त्वादुगितश्चेति ङीप्, सख्युरसम्बुद्धौ अनङ्सौविति णित्त्वानङो सखी सख्यावित्यादावपि स्यातां सख्यशिश्वीति भाषायामिति ङीष्विधानं तु सखीभ्यामित्याद्यर्थं स्यात्, विभाषा भवद्भगवदघवतामित्यत्र त्ववशब्दः सम्बुद्धाविति विशेष्यते तत्र येन नाव्यवधानमित्येकेन वर्णेन व्यवाये ओत्वं प्रवर्त्तमानमिह न भवति हे भगवति हे अघवतीति तदभावात्तत्सन्नियोगशिष्टस्य रुत्वस्याप्यभावः, श्वयुवमघोनामतद्धित इत्यत्राप्यल्लोपोन इत्यतोन इत्यपकर्षाद्युवतीः पश्येति सम्प्रसारणाभावः, तदेवं लिङ्गविशिष्टपरिभाषायाः सन्ति प्रयोजन-

नानि सन्ति च दोषाः, यानि प्रयोजनानि तदर्थमेषा कर्त्तव्या प्रतिविधेयं दोषेषु, प्रतिविधानं च शक्तिलाङ्गलेत्यत्र घटग्रहणेनैव सिद्धे घटीग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थमिति, तदेवं स्थितमेतत् ङ्याब्ग्रहणमनर्थकं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादिति । परिहरति । 'नैतदस्तीति' । 'स्वरूपविधिविषय इति' । स्वरूपाश्रयो विधिः स्वरूपविधिः, स चासौ विषयश्च तत्रेत्यर्थः । किमुक्तं भवतीत्याह । 'प्रातिपदिकस्वरूपग्रहणे सतीति' । कुत एतदित्यत आह । 'तथा चेति' । यथा च युवऽछब्दस्य जरतीशब्देन समासवचनमत्रार्थे ज्ञापकं तथा तत्रैव प्रतिपादितम् । 'तादृशमेवेति । प्रातिपदिकस्वरूपग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यदुक्तं तदनुगुणमेवेत्यर्थः । यदि स्वरूपविधिविषये परिभाषेयं, कथमिष्टवद्भावः कुमारीमाचष्टे कुमारयतीति, बाहुलकात्सिद्धिं मन्यते, चुरादौ हीदं पठ्यते प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चेति । भाष्ये तु यथाकथं चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्थितं, तथा च सर्वप्रातिपदिकेभ्य इत्येकदेति क्विप् ङ्यन्तादपि भवति यामिनयन्त्यहानीति । किं चेत्यादिना प्रयोजनान्तरं समुच्चिनोति । 'कालितरेति' । कालशब्दाज्जानपदादिसूत्रेणङीषि तरपि घरूपकल्पेत्यादिना ह्रस्वः, किं पुनः कारणं तदन्तात्तद्धितविधिर्न सिद्ध्यतीत्याह । 'विप्रतिषेधाद्धीति' । स्त्रीप्रत्ययस्यावकाशः प्रकर्षाविवक्षायां कालीति, प्रकर्षप्रत्ययस्यावकाशः स्त्रीत्वाविवक्षायां कालतर इति, उभयविवक्षायामुभयप्रसङ्गे परत्वात्तद्धितः स्यात्, ङ्याब्ग्रहणे तु सति तरब्विधौ प्रकृतित्रयाधिकारसामर्थ्यात्पूर्वं ङ्यापौ भवतः पश्चात्तरबिति सिद्धमिष्टम् । ननु च स्त्रीत्वस्यान्तरङ्गत्वात्तन्निमित्तः प्रत्ययोऽन्तरङ्गः प्रकर्षस्तु बाह्यप्रतियोग्यपेक्षत्वाद्बहिरङ्गः, ततस्तन्निमित्तस्य प्रत्ययस्यापि बहिरङ्गत्वं, योऽप्यज्ञातादिष्वर्थेषु प्रागिवात्को विधीयते सोऽप्यज्ञाताद्यर्थापेक्षत्वाद्बहिरङ्ग एव, विभक्त्यन्तस्य हि सतः पश्चादज्ञातादियोगो भवति, विभक्तयश्च संख्याकर्माद्यपेक्षाः प्रागेव संख्याकर्मादियोगाल्लिङ्गेन प्रातिपदिकं युज्यते । उक्तं च । स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह

समवेतं, समवेतस्य तु वचने लिङ्गं संख्यां विभक्तिं चाभिधाय तान्विशेषानवेक्षमाणश्च पूर्णमात्मानमप्रियकुत्सनादिषु ततः प्रवर्त्तते ऽसौ विभक्त्यन्त इति, युक्तं चैतत् । तथाहि । नागृहीतविशेषणा विशेष्ये बुद्धिरिति पूर्वं विशेषणभूतः स्वार्थोऽभिधातव्यः पश्चात्तद्विशिष्टं द्रव्यं तस्य धर्मित्वेन प्रधानत्वा,त्ततो लिङ्गमन्तरङ्गत्वा,त्संख्या हि भेदापेक्षत्वाद्बहिरङ्गा सापि तु सजातीयापेक्षा विजातीयकर्मादिकारकशक्त्यपेक्षेभ्यः कारकेभ्योन्तरङ्गेति, ततस्तस्या अभिधानं, ततः कारकाणामेवं परिपूर्णार्थस्य पश्चात्कुत्सनादिभिर्योगः, स्वार्थादयो हि कुत्सनादिहेतवो द्रव्यस्य पण्डितक इत्यादौ तथावसायात्, तदेवमन्तरङ्गः स्त्रीप्रत्ययः बहिरङ्गास्तद्धिताः, अन्तरङ्गबहिरङ्गयोश्चायुक्तो विप्रतिषेधः । इह तर्हि वर्णे चानित्ये, रक्ते, कालाच्चेत्यस्यावकाशः स्त्रीत्वाविवक्षायां कालक इति, स्त्रीप्रत्ययस्य कालीत्यवकाशः, कालिकेत्यत्रोभयप्रसङ्गे परत्वात्कन् स्यात् तस्य चात्यन्तस्वार्थिकत्वाच्च तदपेक्षं स्त्रीप्रत्ययस्यान्तरङ्गत्वमस्ति, नास्त्यत्र विशेषः, कालशब्दादव्युत्पत्तौ प्रत्ययस्थादितीत्वे कालिकेति सिद्धं, यदा तर्हि हरितशब्दाच्च सामिवचनइति प्रतिषेधेन ज्ञापितोत्यन्तस्वार्थिकः कन् क्रियते तदा वर्णादनुदात्तादिति ङीन्नकारौ बाधित्वा परत्वात्कन् स्यात्ततश्च हरिणिकेति न स्यात्, हरितशब्देन समानार्थो हरिणशब्दोस्ति ततः कनीत्वे च भविष्यति, हरितशब्दात्तु हरितिकेति, अयं तर्हि लोहितान्मणावित्यत्यन्तस्वार्थिकः कन् वर्णादनुदात्तादिति ङीन्नकारौ परत्वाद्बाधेत ततश्च लोहितिकेत्येव स्याच्च लोहिनिकेति, उभयमपीष्यते तदर्थं ङ्याब्ग्रहणम् । ननु च लोहितात्लिङ्गबाधनं वेत्यनेनैवैतत्सिद्धं, तच्च वक्तव्यं भवति, कथं, वर्णादनुदात्तादित्यत्र वेति वर्त्तते तत्र ङ्याबन्ताभ्यां लोहिनीलोहिताशब्दाभ्यां कनि विहिते यथायोगं ह्रस्वत्वेत्वयोः कृतयोर्लोहिनिका लोहितिकेति सिद्धमिद,ं तदेवं सति ङ्याब्ग्रहणे लिङ्गनिमित्तेन प्रत्ययेन विकल्पेन बाधा यथा स्यान्नित्यं माभूदित्येवमर्थं तावच्च वक्तव्यं लोहितात्लिङ्गबाधनं वेति, नापि प्रतिपदविहितत्वेन कना लिङ्गनिमित्तस्य प्रत्ययस्य नित्ये बाधे प्राप्ते विकल्पेन बाधा यथा स्यादित्येवमर्थ-

मपि वक्तव्यं, ड्याब्ग्रहणस्यानन्यार्थत्वात्। यदि ह्येतश्वेतशब्दाभ्यामत्यन्तस्वार्थिकः कनिष्यते तदा तत्र ड्याब्ग्रहणस्य चरितार्थत्वाल्लोहितशब्दात्प्रतिपदविहितेन कना ङीपो नित्ये बाधे प्राप्ते तद्वक्तव्यं, तदापि वा न वक्तव्यं, लोहितान्मणावित्यस्यापि पुन्नपुंसकयोश्चरितार्थत्वात्। तदेव मत्यन्तस्वार्थिकोऽपि कन् ङ्यन्ताद्यथा स्यादिति ङीब्ग्रहणं तावत्कर्त्तव्यम्, आब्ग्रहणं तु विस्पष्टार्थं, तत्र समासान्तेषु दोषः, बहवो गोमन्तोऽस्यां नगर्यामिति बहुव्रीहौ कृते स्त्रिया अन्यपदार्थत्वान्ङीप् च प्राप्नोति कप् च ड्याब्ग्रहणान् ङीपि कृते कप् स्यात् ततश्च बहुगोमतीकेति रूपं स्यात् बहुगोमत्केति चेष्यते, नैष दोषः। समासार्थादुत्तरपदादकृत एव समासे समासान्ता भवन्ति पश्चात्तदन्तेन समासः, एवं हि समासं प्रत्यन्तावयवत्वमुपपद्यते समासान्तानां, तथा च न कपीत्यत्र वक्ष्यति। तत्र चोत्तरपदे समासार्थाया विभक्तेः पुरस्तात्समासान्ता इति केचित्। परस्तात्समासान्तेषु सुब्लुकि तद्धितान्तत्वेन ततः सुपि सुबन्तस्य समास इत्यन्ये। सर्वथा बहुचर्मिकेतीत्वं न प्राप्नोति, असुप इति प्रतिषेधात्, यथा बहुपरिव्राजका मधुरेति, कर्त्तव्योऽत्र यत्नः। नञस्तत्पुरुषादित्यादौ तु ग्रन्थविरोधं तत्रतत्र परिहरिष्यामः। तदेवं स्थितमेतत् तदन्तात्तद्धितविधानार्थं ड्याब्ग्रहणं विप्रतिषेधाद्धि तद्धितबलीयस्त्वमिति। यद्येवं यूनस्तिः ऊङुत इति त्यूङोरपि ग्रहणं कर्त्तव्यन्तदन्तात्तद्धितविधानार्थं युवतितरा। भाष्यकारप्रयोगात्तसिलादिष्वाकृत्वसुच इति पुंवद्भावो न भवति, खिद्घादिषु पुंवद्भावाद् ह्रस्वत्वं विप्रतिषेधेनेति वा पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वेन बाधितत्वात्। ब्रह्मबन्धूतरा नद्याः शेषस्यान्यतरस्यामिति ह्रस्वाभावपक्षे जातेश्चेति पुंवद्भावप्रतिषेधः। पूर्वत्र त्वनेन प्रतिषेधो न लभ्यते यौवनस्याजातित्वात्, यावद्द्रव्यभाविनी हि जातिः, तथा च युवजानिरित्युदाहृतम्। नन्वत्रान्तरङ्गत्वादेव त्यूङौ भविष्यतः, अत्यन्तस्वार्थिके तु कनि ब्रह्मबन्धुकेत्यत्र केण इति ह्रस्वे सति नास्ति विशेष ऊङन्ताद्वोत्पत्तौ सत्यामुकारान्ताद्वा,युवतिशब्दादपि कनि पुंवद्भावेन भाव्यमिति नास्त्येव विशेषः। न चास्मात्कश्चिष्यतइत्यत्रापि प्रामाणमस्ति तस्माचार्थस्त्यूङोर्ग्रहणेन ॥

"स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप्" ॥ 'उकारादयोनुबन्धा इत्यादि'। तत्र प्रथमैकवचनस्योकार एतत्तदोः सु लोपो हल्ङ्याब्भ्यो दीर्घात्सुतिसीत्यत्र केवलस्य व्यञ्जनस्योच्चारयितुमशक्यत्वादुच्चारणार्थः, अत्र तु सूत्रे औकारोपश्लेषाच्छक्यते सकारमात्रमुच्चारयितुम्, अनङ् सावित्यत्र विशेषणार्थस्तु न भवति व्यावर्त्यस्याभावात्, न चानङ् सीत्युच्यमाने वर्णनिर्देशे च तदादिविधिसम्भवात्सप्तमीबहुवचनेपि प्रसङ्गः, सर्वनामस्थानइत्यनुवृत्तेः। जसो जकारोस्मिन्नेव सूत्रे ऽसन्दिग्धोच्चारणार्थः, अन्यथा ह्यौकारस्यात्रादेशे सन्देहः स्यात् किमौकारस्योच्चारणमथाविस्यस्येति। जसः शीत्यादौ विशेषणार्थस्तु न भवति, असः शीत्युच्यमानेप्यतिप्रसङ्गाभावात्, शसादीनां सानुबन्धकत्वात्। शसश्शकार औटष्टकारस्यासन्दिग्धोच्चारणार्थः, अन्यथा ङकारष्टकार इति सन्देहः स्यात्, तस्माच्छस इत्यादौ विशेषणार्थस्तु न भवति जसादीनां सानुबन्धकत्वात्। टा इत्यत्र टकारष्टाङसिङसामिनात्स्याः इति विशेषणार्थः, अन्यथा सुपां सुलुगित्यादिना विहितस्याकारस्यापि ग्रहणं स्यात्। तदेवमेषां चतुर्णामुकारादय उच्चारणविशेषणार्थाः, इत्संज्ञाप्येषां प्रयोगे श्रवणं मा भूदिति न पुनरित्कार्यं किं चिदस्ति। औटष्टकारः सुडिति प्रत्याहारग्रहणार्थः, ङेप्रभृतिषु ङकारो घेर्ङितीति विशेषणार्थः। ङसेरिकारो युष्मदस्मद्भ्यां ङसोशित्यत्र ग्रहणं मा भूदित्येवमर्थः। पकारः प्रत्याहारग्रहणार्थ इति। उकारादयोनुबन्धा यथायोगमुच्चारणविशेषणार्था इत्यनेनागतार्थत्वादिदमुक्तमेवं चौटष्टकारः सुडिति प्रत्याहारार्थ इत्ययमिमयन्थेन भवितव्यम्। क्व पुनरिमेर्थे स्वादयो भवन्तीत्याह। 'संख्याकर्मादयश्चेति'। 'शास्त्रान्तरेणेति'। बहुषु बहुवचनं, कर्मणि द्वितीयेत्यादिना। 'तेन सहास्यैकवाक्यतेति'। पूर्वं त्वग्रान्तरवाक्यभेदापेक्षया शास्त्रान्तरेणेत्युक्तम् आकाङ्क्षायोग्यता[१]वशेन भिन्नप्रकरणपठितानामप्येकवाक्यता भवत्येव, प्रकरणभेदेन तु पाठस्तिङादिविधिनाप्ये[२]कवाक्यत्वं यथा स्यादिति। बहुषु बहुवचनमित्यत्र तु भिन्नवा-

१ संनिधीत्यधिकं २ पुस्तके।   २ वाक्यैकवाक्यतेति २ पुस्तके पाठः।

व्यत्वमाश्रित्योक्तं, ङ्याप्प्रातिपदिकात्स्वादयो लस्य तिबादय इति बहुवचनं विहितं तस्यानेन बहुत्वं संख्यावाच्यत्वेन विधीयतइति, अव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्तएवेति च, एकवाक्यतायां तु विशिष्टएवार्थे कर्मादिसंबन्धिन्येकत्वादौ स्वादीनां विधानात्सामान्यविहितत्वं नोपपद्यते, तस्मादव्ययादाप्सुप इत्यव्ययादुत्पन्नस्य सुपो लुग्विधानाल्लिङ्गादव्ययेभ्यो ऽस्मिन्पक्षे स्वाद्युत्पत्तिः । उदाहरणानि यथायोगं स्वेस्वे वाक्ये प्रकटीकरिष्यन्ते ॥

"स्त्रियाम्" ॥ 'ङ्यापोरनेनैव विधानादिति' । प्रातिपदिकमात्रमत्र प्रकरणेभिसम्बद्ध्यतइत्यत्रायं हेतुः, प्रकरणापेक्षया चैतदुच्यते, सूत्रान्तरव्यापारसमये तु सूत्रान्तरविहितप्रत्ययान्ता प्रकृतिः सम्भवत्येव । ननु चात्र प्रकरणे सर्वत्र सति सम्भवे ऽत इति सम्बध्यते, न च ङ्यावन्तमदन्त,मुक्तार्थत्वाच्च ङ्यावन्तात् ङ्यापोरप्रसङ्गः । सत्यम् । न्यायस्तु निरूप्यते, चोदयन्ति । 'स्त्रियामित्युच्यतइति' । सप्तमीनिर्देशेन कार्यान्तरविधानार्थमनूद्यतइत्यर्थः । ततः किमित्याह । 'केयं स्त्री नामेति' । इह शास्त्रे स्त्रिया अपरिभाषितत्वाल्लौकिकस्त्रीग्रहणे च खट्वादावव्याप्तिप्रसङ्गात्प्रसिद्धवदनुवादोनुपपन्न इत्यर्थः । स्वरूपस्य च जिज्ञासितत्वात्प्रथमान्तेन प्रश्नः, कस्यां स्त्रियामिति तूच्यमाने विशेषविषयः प्रश्नः स्यात्, स्त्रीग्रहणं च प्रसङ्गेन पुन्नपुंसकयोरपि प्रदर्शनार्थं, अत एवोत्तरे सामान्यविशेषाः स्त्रीत्वादय इति त्रयाणां स्वरूपं दर्शित, मेवं च प्रथमोपनिपातिनि ह्रस्वो नपुंसकइत्यत्र लिङ्गस्वरूपनिरूपणमुचितं तथा तु न कृतमित्येव, तत्र लौकिकानां लक्षणम्

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषःस्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥

इति । भूमादौ मतुप्, तथैव लोमश इति शः, स्तनकेशवत्त्वं च प्रसिद्धत्वादन्यस्यापि कुमार्यादिगतस्य स्त्रीप्रतिपत्तिहेतोरुपलक्षणं, लोमशत्वं च पुंविज्ञानहेतोः कुमारादिगतस्य, उभयोरपि स्त्रीपुंसयोर्यदन्तरं सदृशं

स्तनलोमाद्युभयव्यञ्जनं तन्नपुंसकमित्यर्थः, तेनाव्ययाख्यातार्थस्य स्त्रीपुंसत्वाभावेपि नपुंसकत्वं न भवति, अन्यथा तदभावइत्येतावत्युक्ते स्यात्प्रसङ्गः, तदभावइत्यनेन कुक्कुटमयूर्यादेः स्त्रीपुंससमुदायरूपस्य द्वन्द्वार्थस्य नपुंकत्वं न भवति, भवति हि समुदायः समुदायिनः सदृश इति स्यात्प्रसङ्गः, नायं प्रसङ्गः । परवल्लिङ्गमित्यनेन समुदायस्य परवल्लिङ्गातिदेशात्, सत्यम् । इदं तु वस्तुस्वरूपनिरूपणपरं द्रष्टव्यं, तदनेन स्तनकेशादिसम्बन्धः, स्तनादय एव वा विशिष्टसंस्थानास्तदुपव्यञ्जना वा जातयः स्त्रीत्वादय इत्युक्तं भवति, अत्र पक्षे भ्रुकुंसे टाप् प्रसज्येत, भ्रुकुंसः स्त्रीवेषधारी नटस्तस्य स्तनकेशसम्बन्ध उपलभ्यते, खरकुट्यादीनां च लोमशत्वात्पुंस्त्वे सति खरकुटीः पश्येत्यत्र नत्वं प्राप्नोति, खरकुटी नापितगृहमुच्यते । ननु च स्वाभाविकपरिणामशालिभिः स्तनादिभिरत्र सम्बन्धो विवक्षितो न यथा कथं चित्, स्तनादि च प्रसिद्धस्यान्यस्याप्युपलक्षणमुक्तं तत्कुतोयं प्रसङ्गः, एवं तर्हि खट्वावृक्षौ न सिद्ध्यतः, खट्वावृक्षादीनां स्तनलोमाद्यभावात् । स्यादेतत् । यथा वस्त्रान्तर्हितानि द्रव्याणि नोपलभ्यन्ते तद्वत्खट्वावृक्षयोः सदेव लिङ्गं नोपलभ्यतइति, तन्न । वस्त्रान्तर्हितानि द्रव्याणि वस्त्रापायउपलभ्यन्ते खट्वावृक्षयोस्तिलशस्तक्षणेपि लिङ्गं नोपलभ्यते, यथा तर्ह्यादित्यगतिः सती प्रत्यक्षेण नोपलभ्यते देशान्तरप्राप्त्या त्वनुमीयते, तथा खट्वावृक्षयोरपि सदेव लिङ्गं सूक्ष्मत्वान्नोपलभ्यते, सतामपि हि भावानां षड्भिः प्रकारैरनुपलब्धिर्भवति, अतिसन्निकर्षाद् यथा स्वचक्षुर्गतस्याञ्जनादेः, अतिविप्रकर्षाद्यथोड्डीनस्य शकुनेः, मूर्तान्तर्द्धानाद्यथा कुड्यादिव्यवहितस्य सुवर्णादेः, अन्धकारावृतत्वाद्यथान्धकाराक्रान्तस्य घटादेः, इन्द्रियदौर्बल्यात् तिमिराद्युपघाते चक्षुरादेः, अतिप्रमादात्, प्रमादो ऽनवधानता, विषयान्तरव्यासक्तचित्तो हि सन्निकृष्टमप्यर्थं नोपलभ्यते, सोऽस्यं त्विन्द्रियदौर्बल्यएवान्तर्भूतं, दिव्यचक्षुःश्रोत्रो हि सूक्ष्ममप्यर्थमुपलभते, एवं समानाभिहारोपि तत्रैवान्तर्भूतः, तद्यथा माषराशौ माषः प्रक्षिप्तः पृथङ्नोपलभ्यते, एवमभिभवोपि, तद्यथा, सौरीभिः प्रभाभिरभिभूतानि नक्षत्राणि दिवा नोपलभ्यन्ते । किम पुनरेतद्व्यवसीयते खट्वावृक्षयोः सदेव

लिङ्गं नोपलभ्यतइति, टाबादेस्तत्कृतस्यानन्यकार्यस्य दर्शनात्, यद्येवमितरेतराश्रयं प्राप्नोति लिङ्गावगमाट्टाबादिशब्दप्रयोगस्तत्प्रयोगाल्लिङ्गावगतिरिति, इन्द्रियदौर्बल्यं कदा चिदुपलब्धस्य कदा चिदनुपलम्भे कारणं शक्यमभिधातुं, खट्वादिषु च लिङ्गस्य कदा चिदप्यनुपलम्भाल्लिङ्गविविक्तखट्वादिवस्तुग्राहिणा प्रत्यक्षेण लिङ्गाभावनिश्चयात्तद्विरुद्धमनुमानं नोदेतुमर्हति, नहि शक्यते वक्तुं भित्तुगृहं गजवद् देशत्वाद्गजशालावत्, प्रत्यक्षेणेन्द्रियदौर्बल्यात्तु गजो नोपलभ्यतइति, तस्मादसदेव लिङ्गं शब्दप्रयोगमहिम्ना खट्वादिषु प्रतीयते, भवत्वेवं श्रोतुः प्रतीतिः, यस्त्वसौ प्रयोक्ता स केन लिङ्गमवगम्य तदनुरूपं शब्दं प्रयुङ्क्ते, किं च कुमार्यर्थः कुमारी वस्त्विति कुमार्यादिष्वर्थवस्तुशब्दयोः पुन्नपुंसकयोरनुपपत्तिः, भाष्ये तु

आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः ।
धर्मा मूर्त्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः ॥

आविर्भाव उपचयः पुंस्त्वं, तिरोभावोऽपचयः स्त्रीत्वम्, अन्तरालावस्था स्थितिर्नपुंसकत्वमित्यर्थः । कस्य पुनराविर्भावादिकं लिङ्गं सत्त्वरजस्तमसां गुणानां तत्परिणामरूपाणां च तदात्मकानां शब्दस्पर्शरूपरसगन्धानां, शब्दादिसङ्घातरूपाश्च सर्वा मूर्तयः प्रतिक्षणपरिणामस्वभावाश्च सत्त्वादयो गुणा न स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठन्ते, एवं शब्दादय आकाशादयो घटादयश्च । उक्तञ्च

सर्वमूर्त्त्यात्मभूतानां शब्दादीनां गणेगणे ।
त्रयः सत्त्वादिधर्मास्ते सर्वत्र समवस्थिताः ॥

इति ।

क्वथितोदकवच्चैषामनवस्थितवृत्तिता ।
अजस्रं सर्वभावानां भाष्यएवोपवर्णिता ॥

इति च । तथा ।

रूपस्य चात्ममात्राणां शुक्लादीनां प्रतिक्षणम् ।
का चित्प्रलीयते का चित्कथं चिदभिवर्द्धते ॥

इति ।

प्रवृत्तिमन्तः सर्वे हि तिसृभिश्च प्रवृत्तिभिः ।
सततं न वियुज्यन्ते वाचश्चैवात्र सम्भवः ॥

इति च । टाबाद्यन्तः शब्द एवैता अवस्था गोचरयतीत्यर्थः । पुरुषो यद्यप्यपरिणामी तथापि

अचेतनेषु सङ्क्रान्तं चैतन्यमिव दृश्यते ।
प्रतिबिम्बकधर्मेण यत्तद्वाचो निबन्धनम् ॥

ततश्च ।

यश्चाप्रवृत्तिधर्मार्थश्चितिरूपेण गृह्यते ।
अनुयातीव सोऽन्येषां प्रवृत्तिर्विष्वगाश्रया ॥
सामान्यमपि गोत्वादि व्यक्तेरव्यतिरेकतः ।
प्रवृत्तिधर्मं तद्द्वारा शशशृङ्गादिवात्तु तु ॥
तस्मादुक्तपदार्थस्य सम्भवाल्लिङ्गयोगिता ।
प्रवृत्तेरपि विद्यन्ते तिस्रो ह्येताः प्रवृत्तयः ॥
पुन्नपुंसकता स्त्रीत्वं तेन स्यादन्यलिङ्गता ।

तदेवं सर्वपदार्थव्यापित्वादुपचयापचयान्तरालावस्था स्त्रीणि लिङ्गानि, एवं च नक्षत्रे तारका तिष्यः, कुमार्यर्थो वस्तु इति एकस्याप्यर्थस्य नानालिङ्गयोग उपपद्यते, आविर्भावादित्रयस्यापि गुणभेदेन तस्मिन्नेवार्थे सर्वदा सम्भवात् । न चैवं तद्वृत्तेः सर्वस्यैव शब्दस्य त्रिलिङ्गता प्रसङ्गः, नह्यस्ति नियमो यः शब्दो यत्रार्थे पर्यवस्यति तत्र विद्यमानः सर्व एवाकारस्तेन शब्देनाभिधातव्य इति किं तु य आकारोऽभिधीयते तेन सता भवितव्यमित्येतावत् । तद्यथा तक्षा युवा कृष्णः कामुक इति तक्षादिशब्दानामेकार्थपर्यवसितानामपि व्यवस्थित एवाकारो वाच्यः, तथा लिङ्गेष्वपि द्रष्टव्यम्, उक्तं च,

सन्निधाने पदार्थानां किं चिदेव प्रवर्त्तकम् ।
यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ॥

इति । उपचीयते कुमारीत्यत्रापि कुमारीशब्दः स्वमहिम्ना कस्य चिद्धर्मस्यापचयमेवाह, शब्दान्तरप्रयोगात्तु धर्मान्तरस्योपचयः प्रतीयते, एवं

चीयते वृक्ष इत्यत्रापचयः, तदेवं सर्वमनाकुलमिदं दर्शनम् । वृत्तिकारस्तु लौकिकानामेवं प्रतिपत्तेरभावात्तत्प्रतिपत्त्यनुगुणं पक्षं दर्शयति । 'सामान्यविशेषा इति' । कानि चित्सामान्यानीत्यर्थः । यद्वा सत्ताव्यतिरिक्तेषु सामान्येषु सामान्यविशेषशब्दो रूढः, तिस्रो ऽवान्तरजातय इत्यर्थः । उक्तं च

> तिस्रो जातय एवैताः केषां चित्समवस्थिताः ।
> अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः ॥
> हस्तिन्यां वडवायां च स्त्रीत्वबुद्धेः समन्वयः ।
> अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीम् ॥

इति । ननु चैषां त्रयाणामपि सामान्यविशेषाणां सर्वार्थेषु सद्भावोऽभ्युपगन्तव्यो, न गोत्वादिवत्कतिपयेष्वेवार्थेषु, कथमन्यथार्थव्यक्तिवस्त्वादिशब्दानां भिन्नलिङ्गानामेकस्मिन्नर्थे प्रयोगः स्यात्, ततश्च सर्वत्र त्रिलिङ्गप्रतिभासप्रसङ्ग इत्यत आह । 'बहुप्रकारव्यक्तय इति' । व्यज्यन्ते सामान्यविशेषा आभिरिति व्यक्तय आश्रयाः, एतदुक्तं भवति । विचित्रत्वादाश्रयाणां व्यञ्जकानां कश्चिदाश्रयः कस्य चित्सामान्यविशेषस्य व्यञ्जको न सर्वः सर्वस्येति, तत्र चेतनेषु स्तनादिमती व्यक्तिः स्त्रीत्वस्य व्यञ्जिका, लोमशत्वादिमती पुंस्त्वस्य, उभयव्यञ्जना नपुंसकत्वस्य, अचेतनेषु कथं, नहि तत्र किं चिदपि लिङ्गं व्यज्यते, तथा चेतनेष्वर्थव्यक्तिवस्त्वादिशब्दानां भिन्नलिङ्गानामप्यनुपपत्तिः, दारशब्दस्य च पुलिङ्गस्य भार्यायामनुपपत्तिरत आह । 'क्व चिदाश्रयविशेषाभावादिति' । तदभिव्यञ्जनसमर्थ आश्रयविशेषः, तत्राचेतनेषु सर्वत्रोपदेशादेवाभिव्यक्तिः, उपदेशः पुनर्लिङ्गानुशासनादिषु । अत्रैव दृष्टान्तमाह । 'यथा ब्राह्मणत्वादय इति' । ब्राह्मणक्षत्रियादिव्यक्तीनामत्यन्तसादृश्यादुपदेशादेव ब्राह्मणत्वादीनामभिव्यक्तिर्भवति नो खलु ब्राह्मणक्षत्रिययोः पुरोवस्थितयोरयं ब्राह्मणोऽयं क्षत्रिय इति प्रागेवोपदेशात्प्रत्यय उदेति । यथा गवाश्वव्यक्त्योरभावे शशविषाणादावप्युत्तरपदार्थद्वारकः सामान्ययोगः, सामान्यं जातिः, स्त्रीत्वं स्त्रीता पुंस्त्वं पुंस्तेत्यादौ सामान्येपि

सामान्यान्तरस्य सद्भावो यथा गोत्वादौ सत्तासामान्यस्य, नह्यस्माकं वैशेषिकाणामिव निःसामान्यानि सामान्यानि, स्त्रीशब्दोयं शुक्लादिशब्दवद्गुणमात्रे गुणिनि च वर्त्तते, तत्र यदा गुणमात्रे स्त्रीशब्दो वर्त्तते तदा द्रव्यवाचिनः प्रातिपदिकात्स्त्रीत्वे ऽभिधेये टाबादयो भवन्तीति स्त्रीत्वं प्रत्ययार्थ इति पक्षो भवति, यदा तु स्त्रीत्वयुक्तं द्रव्यं स्त्रीशब्देनोच्यते तदा परं पक्षद्वयं सम्भवति स्त्रीत्वमुपलक्षणं विशेषणं वेति, तत्राद्ये स्त्रीत्वोपलक्षितद्रव्यवाचिनः प्रातिपदिकाट्टाबादय इति, अयं स्त्रीसमानाधिकरणादिति पक्षो भवति, द्वितीये तु स्त्रीत्वयुक्तद्रव्यवाचिनोऽङ्गीकृतस्त्रीत्वात्प्रातिपदिकादिति प्रकृत्यर्थविशेषणं स्त्रीत्वमिति पक्षो भवति, तत्र स्त्रीसमानाधिकरणादिति चेद् भूतादिष्वतिप्रसङ्गः, भूतमियं ब्राह्मणी प्रधानमियं ब्राह्मणी आवपनमियमुष्ट्रिकेति, उभयोस्तु पक्षयोर्नैष दोषः, कथं, भूतादयः चैतन्यप्राधान्यसम्भवनवद्वृत्तयो न तु स्त्रीत्वाङ्गीकारेण वर्त्तन्ते, तदेवमत्र पक्षे दोषदर्शनादितरयोरन्यतरदाश्रयणीयमित्याह । 'स्त्रीत्वं चेति' । 'उभयथापि युज्यतइति' । ननु प्रत्ययार्थपक्षे द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः, कथ,मेकोयमर्थः स्त्रीत्वं नाम तदेव च प्रकृत्यर्थोपसर्जनं प्रत्ययेनाभिधीयते तस्यैकत्वादेकवचनमेव प्राप्नोति, अनेकश्च प्रत्ययो नोपपद्यते गार्ग्यायणी कारीषगन्ध्या कालितरेति, कथ,मेकोयमर्थः स्त्रीत्वं नाम तस्यैकेनोक्तत्वाद्द्वितीयः प्रत्ययो न प्राप्नोति उक्तार्थानामप्रयोग इति, स्त्रीशब्दे चेकारो न प्राप्नोति, संस्त्याने स्त्यायतेर्ड्रडिति ड्रट्प्रत्ययान्तेन स्त्रीशब्देनोक्तत्वात् संस्त्यानं स्त्रीत्वं, सामानाधिकरण्यं च न स्यात् कुमारी देवदत्तेति, स्वस्वप्रकृत्यर्थावच्छिन्नयोः स्त्रीत्वयोः प्राधान्येनाभिधानात् तत्र व्यतिरेकनिबन्धा षष्ठी प्राप्नोति, कुतः, न तावदन्योन्यतः, परस्परं गुणगुणिभावाभावात्, नापि स्त्रीप्रत्ययप्रकृते,: टाबादिभिर्बाधितत्वात्, यत्र तर्हि प्रतियोगिनि स्त्रीप्रत्ययः प्रतिषिध्यते तत्र षष्ठी प्राप्नोति पञ्च ब्राह्मण्यः स्वसाभिरूपेति,पक्षान्तरे तु द्वयोरपि द्रव्यनिष्ठत्वाद्व्यतिरेकाभावः सामानाधिकरण्यं च भवति, द्रव्यस्य चानेकत्वाद्द्विवचनबहुवचने अपि युक्ते, यथैव च प्रातिपदिकेनो-

केऽपि स्त्रीत्वे टाबादयो भवन्ति, तथानेकोऽपि प्रत्ययो नानुपपन्नः, तद्द्योतको हि तदा नानाप्रत्ययः, प्रदीपादेश्चानेकस्यापि द्योतकत्वं दृष्टं, प्रत्ययार्थपक्षेऽपि न दोषः, यद्यपि स्त्रीत्वमात्रे वाच्ये प्रत्ययः क्रियते तथापि स्त्रीत्वतदाश्रययोरभेदविवक्षया स्वाभाविकत्वाद्वा गुणप्रधानभावस्य द्वयोरपि दृष्टत्वेन सामानाधिकरण्यं वचनभेदश्च भविष्यति, गार्ग्यायणीत्यादौ च द्वाभ्यामेव स्त्रीत्वमभिधातुं शक्यते नैकेन स्वभावात्। यद्वा ष्फस्य षित्करणसामर्थ्यान्ङीष् सिद्धः, ष्यङि यङश्चाबिति वचनसामर्थ्याच्चाप् भविष्यति, तथाहि। अत्र यङ्ष्यङोः सामान्यग्रहणाय तदविघाताय च ष्यङोऽनुबन्धद्वयं कृतं, कालितरेत्यत्रान्यः प्रकर्षयुक्तोऽन्यश्चाप्रकर्षयुक्तस्तत्रावस्थाभेदादेक एवार्थो भिन्नतइति प्रकर्षयुक्तस्यानभिहितं स्त्रीत्वमिति तदभिधानाय टाबपि भविष्यति, स्त्रीशब्देऽपि स्त्रियामित्यस्मादेव निपातनादीकारः सिद्ध इति सुष्ठूक्तमुभयथापि युज्यतइति ॥

"अजाद्यतष्टाप्" ॥ 'अदन्ताच्चेति'। अकारान्तादित्यर्थः। स्वरूपग्रहणं तु न भवति, अच्छब्दान्तात् नीतत् परीतत् कलिङ्गर्दित्यादेः स्त्रीलिङ्गादिति, तदाश्चाचिख्यासायामित्यादेर्निर्देशात्। 'पकारः सामान्यग्रहणार्थ इति'। ङ्याप्प्रातिपदिकादित्यादौ, पकारानुरोधस्तु टाब्डापोः स्वरार्थः। 'टकारः सामान्यग्रहणाविघातार्थ इति'। अन्यथैकानुबन्धत्वादस्यैव ग्रहणं स्यान्न तु डाप्चापोः। 'खट्वेति'। कथं पुनरत्राकारान्ता प्रकृतिरवधार्यते, यावता नित्यमेवायमाबन्तः स्त्रियां वर्त्तते शास्त्रात्प्रयोगाच्च, शाकटायनदर्शने हि सर्वेषामेव व्युत्पत्तिः, पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादौ स्त्रीप्रत्यये लुप्ते प्रयोगएवाकारान्तत्वं दृश्यते। 'शुभंयाः कीलालपा इति'। अन्येभ्योऽपि दृश्यन्तइति विच्, कः पुनरत्र टाऽपि सति दोष इत्याह।'हल्ङ्याब्भ्य इति'। 'सुलोपः स्यादिति'। 'क्व चिज्जातिलक्षण इति'। गणपाठावसरे विभागं दर्शयिष्यति हलन्तानां त्वित्यादिः। 'अजादिग्रहणमिति'। प्रकृतस्य प्रथमान्तस्यान्वयासम्भवात्तदर्थमजादिग्रहणमिति शेषः। 'अमहत्पूर्वेति'। महच्छब्दस्यानुकरणत्वाल्लौकिकार्थाभिधायित्वाभावादान्महत इत्यात्वं न भवति।

'पुंयोगे तु ङीषेवेति' । जातिग्रहणस्य प्रयोजनमाह । ननु पुंयोगे सोय-मित्यभिसंबन्धात्परशब्दः परत्र वर्त्ततइति गौणत्वादेव न भविष्यति, तस्मात्सुखप्रतिपत्त्यर्थं जातिग्रहणम् । अमहत्पूर्वेत्यस्यार्थमाह । 'महत्पूर्वस्येति' । अत्रापि जातिरिति संबध्यते, इह प्रतिषेधो माभूत् महती शूद्रा महाशूद्रेति, नह्यत्र महत्पूर्वः समुदायो जातिवचनः, क्व तर्हि प्रतिषेधः, यत्र समुदायो जातौ वर्त्तते, तदिदं दर्शितम् । 'महाशूद्रशब्दो ह्याभीरजातिवचन इति' । यद्येवं समुदाये जातिवचने गौरखरादिवदवयवार्थाभावाद्व्युत्पत्तिमात्रं क्रियते, तत्रावयवार्थस्य स्त्रीत्वस्याविवक्षितत्वात् पुंसि समासे कृते टापः प्रसङ्ग इति तत्रामहत्पूर्वेति प्रतिषेधः सार्थकः, ततः किममहत्पूर्वेत्यत्र जातिरिति न संबन्धनीयं, कथं महती शूद्रा महाशूद्रेत्यत्रान्तरङ्गत्वाट्टापि कृते पश्चात्सुप्, सुबन्तस्य समासः, ततश्चाभिनिर्वृत्तत्वाट्टापः प्रतिषेधस्याप्रसङ्गः, सत्यं, विस्पष्टार्थमेवात्रापि जातिरिति सम्बध्यते । ननु च शूद्रशब्दः पठ्यते, कः प्रसङ्गो यन्महाशूद्रशब्दात्स्यादत आह । 'तदन्तविधिनेति' । 'अतिधीवरी अतिपीवरीति' । दधातेः पिबतेश्चातो मनिन्क्वनिब्वनिपश्चेति क्वनिपि कृते घुमास्थादिसूत्रेणेत्वं, धीवानमतिक्रान्ता पीवानमतिक्रान्तेति प्रादिसमासः, अत्र वनो र चेति ङीब्रौ भवतः, असति तु ज्ञापने वन इति प्रत्ययग्रहणमथापि कृद्ग्रहणं सर्वथातिक्रान्तप्रधाने समासे न स्यात् । 'अतिभवती अतिमहतीति' । उगितश्चेत्यत्रोगिदित्युगित्प्रातिपदिकस्यैव ग्रहणमित्यङ्गीकृत्येदं प्रयोजनं दर्शितं, तत्र तु वक्ष्यति उगिदिति प्रातिपदिकाप्रातिपदिकग्रहणं तेन ग्रहणवता प्रातिपदिकेनेति निषेधाभावात्तदन्तविधिरिति, यदाहोगिद्ग्रस्य सम्भवति यथाकथं चिदिति तदन्तात्प्रातिपदिकादिति च । अतिमहतीत्यत्र शतृवद्भावाद्वेगादिकादुगिल्लक्षणो ङीप्, केचिद्गौरादिपाठाद् ङीषं वर्णयन्ति, तदयुक्त-मनुपसर्जनाधिकारात् । किं च गौरादिपाठस्य प्रयोजनमपि न पश्यामः । ननु च महतीशब्दोन्तोदात्त इष्यते, सत्यं, शतुरनुम इत्यत्र नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानमित्यनेनैव सिद्धं, विभक्त्युदात्तार्थं

तदिति चेत् तदेव ङीबुदात्तार्थमपि भविष्यति, अतिमहतीत्यादौ च ङीषभावस्योक्तत्वात् ङीबुदात्तार्थमप्युपसंख्यानमेष्टव्यं, यदि तदन्तविधिर्न्नाश्यते पञ्चानामजानां समाहारः पञ्चाजी द्विगोरपि टाप् प्राप्नोति। अत्राहुः। अजाद्यत इति षष्ठी अजादीनामजन्तानां च या स्त्री तद्वाच्येऽर्थे यत् स्त्रीत्वं समवेतं तत्र टाबिति, प्रत्यासत्त्या च स्त्रीत्वविशेषोपलक्षणानामेव प्रकृतित्वं विज्ञायतइति मत्वा वृत्तिकारेणोक्तम् अजादिभ्यः प्रातिपदिकेभ्योऽदन्ताच्चेति, न च पञ्चाजीत्यत्राजार्थे समवेतं स्त्रीत्वं किं तर्हि समाहारे, एवं चामहत्पूर्वेति प्रतिषेधः शक्योऽकर्तुं, नहि महाशूद्रीत्यत्र शूद्रार्थगतं स्त्रीत्वं, तदन्तविधिस्त्वनुपसर्जनादित्यत्र ज्ञापयिष्यते। 'सत्प्राक्काण्डेति'। पाककर्णेत्यत्र वार्त्तिकं सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्प्रतिषेध इति, तत्रैव भाष्यं प्राक्पुष्पा च प्रत्यक्पुष्पा चेति, तस्मादत्रापि प्राक्शब्दो न पठनीयः सदच्काण्डेत्येव पठनीयम्॥

"ऋन्नेभ्यो ङीप्"॥ 'ङकारः सामान्यग्रहणार्थ इति'। ङ्याप्प्रातिपदिकादित्यादौ, पकारः सामान्यग्रहणाविघातार्थ इति तु पूर्वानुसारेण गम्यमानत्वान्नोक्तम्, अत्रापि पकारानुरोधानुदात्तार्थः॥

"उगितश्च"॥ 'यथाकथं चिदिति'। यदि वर्ण उगित् संभवति यदि वा प्रत्ययोऽथापि प्रातिपदिकं सर्वथा यत्रैषामन्यतमः प्रकारः संभवतीत्येष यथाकथंचिदित्यस्यार्थः। एतदेव स्पष्टयति। 'तदुगिच्छब्दरूपमिति'। प्रत्ययाप्रत्यययोः प्रातिपदिकाप्रातिपदिकयोः शब्दरूपमन्यपदार्थः, न प्रातिपदिकमेव नापि प्रत्यय एवेत्यर्थः। तत्रोगिता प्रातिपदिकस्य विशेषणात्तदन्तविधिर्भवतीत्याह। 'तदन्तादिति'। 'पचन्तीति'। यत्र शतृप्रत्यय उगित् तदन्तं प्रातिपदिकम् अतिभवती अतिमहतीत्यत्रापि भवति, ग्रहणवता प्रातिपदिकेनेत्ययं तु प्रतिषेधो यत्र सूत्रोपात्तं प्रातिपदिकस्यासाधारणं रूपं तत्रैव भवतीत्यत्रापि व्यपदेशिवद्भावेन भवति, व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्ययं तु निषेधः प्रातिपदिकस्यैवासाधारणरूपग्रहणे, अतिगोमतीत्यत्रापि भवति, प्रत्ययग्रहणपरिभाषा तु प्रत्य-

यस्यैवासाधारणरूपग्रहणे भवति । 'धातोस्तूगितः प्रतिषेध इति' । वक्तव्य इति शेषः, स तर्हि वक्तव्यः, न वक्तव्यः । उगिद्वचामित्यत्रोगित्वादेव सिद्धेऽञ्चतिग्रहणं नियमार्थमिह शास्त्रे उगितो यत्कार्यं विधीयते तद्धातोर्यदि भवति अञ्चतेरेवेति, कार्यमात्रं नियम्यते न नुमागम एव, अधातुग्रहणं चाधातुपूर्वस्यापि नुमर्थमिति तत्रैव वक्ष्यते । अपर आह, उगितश्चेति योयं चशब्दः सोऽञ्चतेर्लुप्तनकारस्यानुकरणं, विभक्तेश्च सुपां सुलुगिति लुक्, भाविनं चाकारलोपमाश्रित्य चेति निर्देशः कृतः, ततश्चाञ्चतिग्रहणं नियमार्थमकारनकारलोपयोश्चातन्त्रत्वात्प्राञ्चेः पूजायामिति लोपनिषेधविषयेपि ङीब् भवति, प्राञ्ची प्रत्यञ्ची ब्राह्मणीति । 'उखास्रत्पर्णध्वदिति' । क्विप् चेत्यत्रानयोर्व्युत्पत्तिः कृता ॥

"वनो र च" ॥ वन इति क्वनिब्वनिब्ङ्वनिपां प्रत्ययानां सामान्येन ग्रहणं, न वन षण संभक्तौ, वनु याचनइति धात्वोर्विजन्तयोः, कुतः, प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति, अत एव शुनो निष्क्रान्ता युवानमतिक्रान्ता निःशुनी अतियूनीत्यत्रापि न भवति, अनर्थकत्वाद्वा । 'शर्वरीति' । शृ हिंसायाम्, अन्येभ्योपि दृश्यन्तइति वनिप् । 'परलोकदृश्वरीति' । दृशेः क्वनिप् । 'वनो न हश इति' । विहितविशेषणं हश्ग्रहणं हशन्ताद्धातोर्यो वन्विहितस्तदन्तात्प्रातिपदिकात् ङीब्रौ न भवत इत्यर्थः, तेन शर्वरीत्यत्र प्रतिषेधाभावः, तथा ओण् अपनयने वनिपि विड्वनोरनुनासिकस्यादित्यात्वे अवादेशे अवावचित्यत्र संप्रति हशः परत्वाभावेपि हशन्ताद्विहितत्वात् प्रतिषेधो भवत्येव अवावा ब्राह्मणीति, एष एव स्थितः सिद्धान्तः । बहुलं छन्दसि ङीब्रौ वक्तव्यौ । यज्वरीरिषः । प्रईरिशवोस्तुट् च, प्रेत्वरी ॥

"पादो ऽन्यतरस्याम्" ॥ 'पादिति कृतसमासान्तः पादशब्दो निर्दिश्यतइति' । उत्तरसूत्रे ऋच्यभिधेयायां तस्यैव संभवात्, तेन पादयतेः क्विबन्तस्य ग्रहणं न भवति । 'द्विपदीति' । द्वौ पादावस्या इति बहुव्रीहौ संख्यासुपूर्वस्येत्यकारलोपे पादः पदिति पद्भावः ॥

"टाबृचि" ॥ 'ऋचीत्यभिधेयनिर्देश इति' ॥ व्याप्तेः, विषयनिर्देशे हि ऋग्वेदविषयएव हि प्रयोगे स्याचान्यत्र ॥

"न षट्स्वस्रादिभ्यः" ॥ टाबृचीति पादन्ताद्विहितस्य टापोत्राप्रसङ्गात्तदनन्तरस्य ङीपोयं प्रतिषेध इत्याशङ्कामपनयति । 'यो यत इति'। तत्र सर्वेभ्य एव ङीप् प्राप्नोति, टाप्तु नलोपे सत्यकारान्ततायामुपजातायां षड्भ्य एव, यो यः प्राप्त इति तु युक्तः पाठः, अन्यथा स ततो न भवतीति वाच्यं स्यात्, व्याप्तिश्च न गम्येत । 'पञ्च ब्राह्मण्य इति'। ननु चात्र ब्राह्मणीशब्दसामानाधिकरण्यात् स्त्रीत्वावगतिः, संख्याशब्दस्तु स्वमहिम्ना भेदगणनमाह । तथाहि । पञ्चेत्युक्ते नानात्वमात्रं द्रव्यस्य गम्यते न लिङ्गविशेषः, तथा च लिङ्गानुशासनेषु ष्णान्ता संख्येत्यलिङ्गत्वमुक्तं, यद्येवमेका द्वे बह्व्य इत्यत्रापि प्रत्ययो न स्यात्, संख्याशब्दत्वेन भेदगणनामात्रस्य शब्दार्थत्वात् । अथ तत्र स्त्रीत्वमपि शब्दार्थः, पञ्चादिष्वपि स्यात्, वक्तव्यो वा विशेषः, सति तस्मिन् प्रतिषेधे नान्तरेणानुप्रयोगं पञ्चेत्यादौ स्त्रीत्वाद्यभिव्यक्तिरिति लिङ्गानुशासनेष्वलिङ्गत्वमुक्तमसति तु प्रतिषेधे पञ्चादिभ्यः स्त्रीप्रत्ययो न भवति, एकादिभ्यस्तु भवतीति न शास्त्रैकशरणः प्रतिपत्तुमर्हति । ननु विभक्तौ परतः त्रिचतुरोः स्त्रियां तिसृचतसृभावः, तत्र संनिपातपरिभाषयैव ङीबभावः सिद्धस्तत्किं तिसृचतसृशब्दयोः स्वस्रादिपाठेन । ज्ञापनार्थं तु । एतज्ज्ञापयति अनित्या संनिपातपरिभाषेति, तेन त्यदाद्यत्वे कृते टाब् भवति या सा इमे द्वे इति, ङीपोनन्तरस्यायं प्रतिषेधो युक्त इत्याश्रित्य चोदयति । 'षट्संज्ञानामिति' । 'कस्माच स्यादिति' । अत इति हि प्राप्नोति, असिद्धो नलोपस्तस्यासिद्धत्वाचैतददन्तं, परिगणितेषु कार्येषु नलोपो ऽसिद्धो भवति, नलोपः सुप्स्वरेत्यस्य नियमार्थत्वात्, नेदं तत्र परिगण्यते, इदमपि तत्र परिगण्यते, कथं, सुबिति न सप्तमीबहुवचनेन प्रत्याहारः किं तर्हि यङश्चाबिति चापः पकारेण, ततश्च टापोपि प्रत्याहारेन्तर्भावात्तद्विधिरपि सुब्विधिरेवेति, तदेतदाह । 'प्रत्याहाराच्चापेति' । न स्यादित्यनुषङ्गः, कस्माच स्यादिति प्रश्नः । चापा

प्रत्याहाराच्च स्यादिति परिहारः। इदं चाचार्यदेशीयस्य वचनम्, आचार्यसिद्धान्तं दर्शयितुमेतद् दूषयति। 'सिद्धं टाबस्त्वित्त्वइति'। सत्यं सिद्धमिदं चापा प्रत्याहारे, इत्वे तु दोषो भवति, बहूनि चर्माण्यस्याः बहुचर्म्मिकेति, कथं तत्र सुब्विधिरिति सर्वविभक्त्यन्तावयवः समास आश्रितः, सुपो विधिः सुपि विधिरिति, ततश्च यथा राजभ्यामित्यत्र सुपि चेति दीर्घत्वं न भवति तथा टापि सुपि विधीयमानमित्वमपि सुब्विधिरिति तत्र कर्त्तव्ये नलोपस्यासिद्धत्वात्कात् पूर्वाकारो न भवतीतीत्वं न स्यादित्यर्थः। सिद्धान्तमाह। 'तस्माच्चोभाविति'। स्त्रियामित्यर्थमात्रमपेक्ष्य तत्र यदुक्तं तत्र भवतीत्येवं ङीप्टापावुभावपि प्रतिषेध्याविल्यर्थः। ननु च सकृत्प्रतिषेधस्य प्रवृत्तिः, स च स्वप्रवृत्तिसमये यस्य प्रसङ्गस्तमेव प्रतिषेधति, ततश्च पूर्वं ङीपि प्रतिषिद्धे नलोपे च कृते पश्चात्प्राप्नुवतष्टापः कथं प्रतिषेधः, आत्माश्रयो हि स्यात् स्वप्रवृत्तिमपेक्ष्य स्वप्रवृत्तिरिति, तस्मात्तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेन द्विरस्य प्रवृत्तिः, तत्र द्वितीयया प्रवृत्त्या टापः प्रतिषेधः॥

"मनः"॥ 'अनिनस्मन् ग्रहणानीति'। अन् इन् अस् मन् इत्येतेषां ग्रहणे अर्थवत्परिभाषा न व्याप्रियते, तेनैषामनर्थकानामपि ग्रहणं भवति, एभिश्चार्थवद्भिरनर्थकैश्च तदन्तविधिर्भवतीत्यर्थः, सीमन्शब्दोव्युत्पन्नं प्रातिपदिकम्, अतिक्रान्ता महिमानमतिमहिमा अत्रापीमनिच एवार्थवत्त्वं न तु मनः॥

"अनो बहुव्रीहेः"॥ 'अनुपधालोपी बहुव्रीहिरिहोदाहरणमिति'। कुत एतदित्याह। 'उपधालोपिनो हीत्यादि' 'विभाषां वक्ष्यतीति'। अन उपधालोपिनोऽन्यतरस्यामित्यनेन। 'सुपर्वेत्यादि'। शोभनं पर्वास्याः शोभनं चर्मास्या इति बहुव्रीहिः, अयं च न संयोगाद्वमन्तादित्यल्लोपस्य प्रतिषेधादनुपधालोपी। 'बहुव्रीहेरिति किमिति'। समासादिति वाच्यमिति भावः। 'अतिराज्ञीति'। राजाहः सखिभ्य इति टज् न भवति समासान्तविधेरनित्यत्वात्॥

"डाबुभाभ्यामन्यतरस्याम् ॥ 'अन्यतरस्यांग्रहणं किमिति' । डापा मुक्ते प्रतिषेधो यथा स्यादित्येवमर्थं तावदेतन्न कर्त्तव्यं, कथं डाबप्युच्यते प्रतिषेधोऽपि तावुभौ वचनाद्भविष्यतः, यदि हि नकारान्तस्य श्रवणं न स्यात्तदा डापैवापवादेन ङीपो बाधात् प्रतिषेधोनर्थकः स्यात्, अथ डाप्प्रतिषेधाभ्यां मुक्ते ङीबपि यथा स्यादित्येवमर्थमन्यतरस्यांग्रहणं तदपि न, बहुराज्ञीत्यादावन उपधालोपिनोन्यतरस्यामित्यनेनैव ङीपः सिद्धत्वात्, यत्र तर्हि तेन न सिद्ध्यति अतिशर्मेत्यादौ तदर्थमेतत्स्यात्, यद्येवमनेनैवोपधालोपिनोऽपि सिद्धत्वादन उपधालोपिन इत्येतदनर्थकं स्यात्, एवं तर्हि तदन्यतरस्यांग्रहणं न करिष्यामीतीदमन्यतरस्यांग्रहणं क्रियते, कथमनेनैवान्यतरस्यांग्रहणेनोपधालोपिनोनुपधालोपिनश्च ङीपि प्रापिते सत्यन उपधालोपिन इत्येतावदपि क्रियमाणं नियमार्थं भविष्यति, अनो बहुव्रीहेर्यन् ङीब्विधानं तदुपधालोपिन एवेति, ततश्च तदन्यतरस्यांग्रहणं न कर्त्तव्यं भवति, तदवश्यं कर्त्तव्यम्, असति हि तस्मिन्ननेनान्यतरस्यांग्रहणेन बहुव्रीहिमात्राड्डाप्प्रतिषेधङीप्सु त्रिष्वपि प्राप्तिषूपधालोपिनो डाप्प्रतिषेधौ बाधित्वा नित्यं ङीबेव यथा स्यादित्येवमर्थं तत्स्यात्, अतस्तदवश्यं कर्त्तव्यम्, इदं तु न कर्त्तव्यमिति प्रश्नः, परिहरति । 'बहुव्रीहाविति' । अयमभिप्रायः, डाप्प्रतिषेधाभ्यां मुक्ते ङीबपि यथा स्यादित्येवमर्थमिदं तावदन्यतरस्यांग्रहणं, न चान उपधालोपिन इत्यस्य वैयर्थ्यं, नियमार्थत्वात्, अनो बहुव्रीहेर्यदन्यतरस्यां ङीब्विधानं तदुपधालोपिन एवेति, तेन सुपर्वा सुशर्मेत्यादावनेनान्यतरस्यांग्रहणेन प्रापितो ङीब् न भवति बहुराज्ञीत्यादावेव तु भवति, नन्वेवमिदमन्यतरस्यांग्रहणं मा भूत् अन उपधालोपिन इत्येतदेव विध्यर्थमस्तु को वा विशेषः, अनेनान्यतरस्यांग्रहणेन बहुव्रीहिमात्रान् ङीपि प्रापिते तन्नियमार्थं स्याद् असति वास्मिन् डाप्प्रतिषेधयोरेव प्राप्तयोरुपधालोपिनो ऽप्राप्तो ङीप् पक्षे विधीयतइति । अयमस्ति विशेषः । अस्मिन्नन्यतरस्यांग्रहणे सति डाप्प्रतिषेधाभ्यां मुक्ते स्वेनस्वेन शास्त्रेण ङीब् भवन्नन्तेषु वनो र चेत्यनेनैव भवतीति बहुधीवरीत्यादौ रेफोऽपि

भवति, एवमनेन वन्नन्तादुपधालोपिनोनुपधालोपिनश्च बहुव्रीहेर्बहुधीव-न्सुपर्वन्नित्यादेर्ङीब्रेफयोः प्रापितयोरन्यत्र बहुराजन्सुशर्मन्नित्यादौ केवले ङीपि प्रापिते सत्यन उपधालोपिनोन्यतरस्यामित्येतन्नियमार्थं भवति, तेन च नियमेन सुशर्मेत्यादौ ङीब् व्यावर्त्यते, सुपर्वेत्यादौ ङीपि व्यावर्त्तिते तत्संनियोगशिष्टत्वाद्रेफोपि न भवति, बहुराज्ञीत्यादौ तु यथाप्राप्तो ङीबवस्थितः, बहुधीवरीत्यादौ च वनो र चेत्यनेन प्राप्तौ ङीब्रेफाववस्थिताविति सर्वमिष्टं सिद्ध्यति, असति त्वस्मिंस्तस्मिंश्च विध्यर्थे ऽपूर्व एव ङीप् तेन विधीयतइति वन्नन्ते बहुव्रीहावृन्नेभ्यो ङीबित्येतत्संनियुक्तं वनो र चेत्येतच्च प्रवर्त्ततेति केवले ङीपि सति बहुधीवनीति स्यात्, अतो ऽन उपधालोपिन इत्येतन्नियमार्थं यथा स्यात्स्वतन्त्रो विधिर्मा भूदित्येवमर्थमिहान्यतरस्यांग्रहणं क्रियतइति तदिदमन उपधालोपिन इत्यत्र वृत्तिकारः स्पष्टयिष्यति । यद्यनेनान्यतरस्यांग्रहणेन पक्षे ङीबपि प्राप्यते दामेत्यादौ मन्नन्तादपि प्राप्नोति, नैष दोषः, योगविभागः क्रियते डाबुभाभ्यां भवति, ततो ऽन्यतरस्याम्, अनो बहुव्रीहेरित्येव वर्त्तते, मन इति निवृत्तम् ॥

"अनुपसर्जनात्" ॥ प्रसज्यप्रतिषेधोयमित्याह । 'उत्तरसूत्रेष्वपसर्जनप्रतिषेधं करोतीति'। पर्युदासे को दोषः, कुक्कुटीपाद इत्यत्र न स्यात् पूर्वपदस्योपसर्जनत्वात्, न । अन्तरङ्गत्वात्प्रागेव ङीषि कृते तदन्तस्य समासः, न चेदानीमुपसर्जनत्वे ङीषः पर्युदासः, पूर्वमेवाभिनिर्वृत्तत्वात् । किं च प्रसज्यप्रतिषेधेप्येष दोषः समानः, कुक्कुटीत्यत्रैव तर्हि न प्राप्नोति, किङ्कारणमन्वर्थमुपसर्जनमप्रधानमुपसर्जनमिति, अस्त्वेवमनुपसर्जनं तूपसर्जनादन्यत्सर्वं न तु प्रधानमेव, तेनापेक्षणीयस्याभावेप्यप्रधानादन्यत्वाद्भविष्यति,यदा तर्ह्यधर्मानृतादिवद्विरोधिवचनोनुपसर्जनशब्दस्तदा न प्राप्नोति, तस्मात्प्रसज्यप्रतिषेधः । 'अनुपसर्जनादित्येवं तदिति'। उपसर्जनाच्च भवतीत्येवमित्यर्थः । 'वक्ष्यति टिड्ढाणञिति ङीबिति'। कथं प्रथमान्तस्य वक्ष्यतीत्यनेन सम्बन्धः । अत्राहुः । वक्ष्यति टिड्ढाणञित्येतावान् ग्रन्थः, टिड्ढाणञिति वक्ष्यतीत्यर्थः । कः पुनरत्र प्रत्यय इत्यत्राह । 'ङीबिति'। एवं

जातेरिति ङीष् इत्यत्रापि ग्रन्थच्छेदः, तत्र च पूर्वस्मिन्वक्ष्यतीत्यनुषङ्गः। 'कुरुचरीति'। चरेष्टः। 'बहुकुरुचरेति'। बहुव्रीहिः सर्वोपसर्जनः। 'कथं पुनरित्यादिः'। प्रत्युदाहरणे यदुपसर्जनं न तत् स्त्रियां वर्त्तते, यदा च स्त्रियां वर्त्तते तदा भवत्येव प्रत्ययः, बह्व्यः कुरुचर्योऽस्यां बहुकुरुचरीका बहुकुक्कुटीका मथुरेति, यः स्त्रियां वर्त्तते बहुव्रीहिस्ततोऽटित्त्वादजातित्वाच्चाप्रसङ्गः। तथाहि। टित्प्रातिपदिकं गृह्यते तच्च किंचित्साक्षाट्टिद्भवति यथा नदट् चोरडिति, किंचित्त्ववयवटित्त्वद्वारेण, यत्र ह्यवयवटित्त्वमकिंचित्करं तत्र समुदायार्थं तद्विज्ञायते, स चावयवः क्वचिद्धातुः स्तनन्धयीति, क्वचित्कृल्ल्युडादिः, क्वचित्तद्धितष्ट्युट्युलादिः, तत्र यं समुदायं योऽवयवो न व्यभिचरति तदर्थं तस्य टित्त्वमिति कुरुचरशब्द एव टित् तत्कुतो बहुकुरुचरशब्दात्प्रसङ्ग इति प्रश्नः। परिहरति। 'तदन्तविधिनेति'। ननु ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते, ग्रहणं चोपादानमात्रं न तु स्वरूपेणोच्चारणमेव तत्कथं तदन्तविधिः। स्यादेतत्। यत्र गृह्यमाणं रूपं प्रातिपदिकस्यैवासाधारणं तत्र तदन्तविधिप्रतिषेधः, इह चोरडित्यादि प्रातिपदिकमपि टित् ल्युडादिप्रत्ययोऽपि धेडिति धातुरपि, ततश्च यथोगितश्चेत्यत्र वर्णाप्युगित्प्रत्ययोऽपि प्रातिपदिकमपीति तदन्तविधिर्भवति तथेहापि प्रसङ्ग इति, स्यादयं प्रसङ्गो यदि टिता प्रातिपदिकं विशेष्येत टिति च प्रातिपदिकेन विशेष्यमाणे नानेन विशेषणेन तदन्तविधिः, प्रातिपदिकेन चासम्भवादिति नैव बहुकुरुचरशब्दात्प्रसङ्ग इत्यत आह। 'ज्ञापितं चैतदिति'। शूद्रा चामहत्पूर्वेत्यत्र ज्ञापितमेतत्। अवश्यञ्चैतज् ज्ञापितमुत्तरत्रापि परिपालनीयमित्याह। 'तथा चेति'। अनाश्रीयमाणे ज्ञापकेऽणन्ताद्विधीयमानो ङीप् प्रत्ययग्रहणपरिभाषया कारशब्दादेव स्याद् न त्वणन्तात्कुम्भकारशब्दात्, ज्ञापकात्तु ततोऽपि भवतीत्यर्थः। ननु च कृद्ग्रहणपरिभाषया कुम्भकारशब्दस्याणन्तत्वं, नेत्याह। 'न वाणिति'। 'कृद्ग्रहणमिति'। किं कारणमित्यत्राह। 'तद्धितोऽप्यणस्तीति'। यत्र तु गृह्यमाणं रूपं कृत एवासाधारणं तत्रैषा परिभाषा, इह त्वौपगवीति तद्धितस्यापि ग्रहणमिति

नायमस्या विषय इत्यर्थः । अथ कारशब्दादुत्पत्तौ सत्यां को दोषः, कौम्भकारेयो न सिद्ध्यति, प्रत्ययग्रहणपरिभाषया कारीशब्दात्स्त्रीभ्यो ढकि तस्यैव वृद्धिस्वरौ स्यातां, ष्यङः सम्प्रसारणञ्च भविष्यति, तद्यथा, ष्यङन्तस्योच्यमानं सम्प्रसारणं परमकारीषगन्धीपुत्र इत्यत्रापि भवति स्त्रीप्रत्यये तदादिनियमाभावात् तथा कारशब्दादप्युत्पत्तौ कुम्भकारीशब्दस्यापि स्त्रीप्रत्ययान्तत्वाद्भविष्यति, एवमपि कारीशब्दादपि कदा चित्स्यात्, अथ ब्रूयाः, कारीशब्देन कुम्भशब्दः समसिष्यते, स्त्रीभ्यो ढगित्यत्र च ङ्याप्प्रातिपदिकादिति त्रितयाधिकारसामर्थ्यात्स्त्रीप्रत्ययान्तात्प्रातिपदिकादिति प्रत्ययो विधास्यते, स्त्रीप्रत्ययान्तस्य च प्रातिपदिकत्वं समासमन्तरेणानुपपन्नमिति कुम्भकारीशब्दादेव ढगुत्पत्स्यते, ङ्याब्ग्रहणानुवृत्त्या च सौपर्णेय इत्यत्रापि भविष्यतीति, एवमपि ङ्याबनुवृत्तेः सौपर्णेय इतिवत् कारीशब्दादपि स्यात्, गतिकारकोपपदानामिति वचनाच्च ङ्यन्तेन समासो दुर्लभः, ततः कुम्भकारशब्दादेव ङीष्यथा स्यादित्युत्तरत्रापि तदन्तविधिरभ्युपगन्तव्यः । न च कुम्भकारशब्दादप्युत्पत्तौ तदादिनियमाभावात्कारीशब्दादपि ढक् प्रत्ययप्रसङ्गः, किं कारणं स्त्रीप्रत्यये चानुपसर्जनेनेत्यनेन, प्रत्ययग्रहणे यस्मात्स तदादेरधिकस्य ग्रहणमभ्यनुज्ञायते न न्यूनस्यापि । ननु च सत्यप्युत्तरत्र तदन्तविधौ कुम्भकारीत्यत्र समुदायादपि भवतु, केवलात्कारशब्दादपि प्रसङ्गो यथोपगवीत्यादौ, ततश्च कौम्भकारेयः पक्षे दुष्यत्येव, एवं तर्हि कारशब्दादप्युत्पत्तौ कुम्भेनैकार्थीभूतस्य तावतो निष्कृष्यापत्येनायोगात्तदादिनियमाभावाच्च समुदायादेव ढग्भविष्यति । यद्वा कुम्भेनैकार्थीभूतस्य कारस्य स्त्रीत्वेनायोगात्स्त्रीप्रत्यय एव न भविष्यति, असति पुनरुत्तरत्र तदन्तविधौ स्त्रीप्रत्ययस्यात्राप्रसङ्गः, किं कारणं, यदणन्तं न तस्य निष्कृष्य स्त्रीत्वेन योगः, यस्य च स्त्रीत्वेन योगो न तदणन्तम् । अत उत्तरत्राप्यवश्यं प्रधानेन तदन्तविधिरभ्युपगन्तव्यस्तत्र यथा प्रधानेन भवति तथोपसर्जनेनापि स्यादिति प्रतिषेधोयमारभ्यते, तथा च पूर्वत्रोपसर्जनेनापि तदन्तविधिर्भवति, न षट्स्वस्रादिभ्यः प्रियपञ्चा द्रौपदीति, अतिक्रान्ता भवन्तमतिभवतीति । स्यादेतत् । पूर्व-

त्रोपात्तं तदन्तं वा स्त्रियामित्यनेन विशेष्यते, टिड्ढाणञित्यादिषूपात्तमेव टिदादिकं, तेन ज्ञापितेपि तदन्तविधौ बहुकुरुचरेत्यादौ टिदादेरस्त्रीत्वाच्च भविष्यति, कुम्भकारीत्यत्र त्वणन्तस्य स्त्रियां वृत्तेस्तदन्तादपि भविष्यति नार्थ एतेनेति, तच्च। त्वदुक्तस्य विषयविभागस्य दुर्ज्ञानत्वात्, अतो विषयविभागज्ञापनार्थमिदमारभ्यते। नन्वारब्धेप्यस्मिन्नेव विषयविभागः शक्य आख्यातुं, पञ्चाजीत्यत्राजानामस्त्रीत्वेन तदन्तस्य स्त्रियां वृत्तेरजाद्यतष्टाबिति टाप् प्रसङ्गात्, अतो विशेषणविशेष्यभावं प्रति कामचारादजाद्यतष्टाबित्यत्र टिड्ढाणञित्यादौ चोपात्तं स्त्रीत्वेन विशेष्यते, वनो र चेत्यादावुपात्तं तदन्तस्य चेति नार्थ एतेन। एवं तर्हि तदन्तविधिज्ञापनार्थमिदमारभ्यते, अमहत्पूर्वेत्येतत्तु शक्यमकर्त्तुं, नहि महाशूद्रेत्यत्र समुदाये जातिवचने शूद्रशब्दः स्त्रियां वर्त्तते। अपर आह। लौकिकस्याप्रधानस्योपसर्जनस्येह ग्रहणं तेनापिशलिना प्रोक्तमिञश्चेत्यण्, ततोध्येत्र्यां तदधीतइत्यण्, तस्य प्रोक्ताल्लुगिति लुक्, आपिशला ब्राह्मणी, अत्र इञश्चेति विहितस्य प्रोक्तप्रत्ययस्याणो ऽप्रधानत्वात्तदन्तान्ङीञ् न भवति, नन्विदानीमध्येतृप्रत्यये लुप्ते प्रकृतिरेव तदर्थमाहेति प्रधानस्त्रियामध्येत्र्यामणन्तस्य वृत्तेः स्यादेव ङीप् प्रत्ययः। स्यादेतदेवं यद्यणन्तादनुपसर्जनादित्युच्येत वयं त्वणमेवानुपसर्जनत्वेन विशेषयिष्यामः, अणयेनुपसर्जन इति, अर्थद्वारकं चाणः प्राधान्यमप्राधान्यं च, तदेतदुक्तं भवति, यस्मिन्नर्थेणुत्पन्नः स यदा प्राधान्येनोच्यते तदा तदन्तान्ङीब् भवति, यदा तु गुणभावेन तदा नेति, इह चाध्येत्र्यां सङ्घान्तत्वात्प्रथमस्याणोर्थो गुणभूत इति तदाश्रयस्तावन्ङीब् न भवति, यस्त्वध्येत्र्यामुत्पन्नस्तदाश्रयोपि न भवति तस्य लुप्तत्वात्। प्रत्ययलक्षणेनापि न भवति, अणाकारस्य विशेषणात्, टिड्ढाणञित्यत्र ह्यत इति वर्त्तते तत्राणन्तादकारान्तादिति विज्ञायमाने स्यात्प्रत्ययलक्षणमणा त्वकारे विशेष्यमाणे वर्णनिमित्तो ङीप् प्रत्ययः कथं प्रत्ययलक्षणेन स्यात्। ननु स्त्रियामित्यनुवृत्तेनाणं विशेषयिष्यामो योण् स्त्रियां विहित इति, एवमपि काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी तामधीते काशकृत्स्ना ब्राह्मणीति द्वितीयेपि

प्रोक्ताल्लुगिति लुप्तेपि प्रथमोप्यण् स्त्रियामेवोत्पन्नस्तदन्ताद्बाह्मण्यां वर्त्तमानान्ङीप्प्रसङ्गः, तस्मात्प्रधानाद्यथा स्यादप्रधानान्मा भूदित्येतत्प्रयोजनं सूत्रस्येति ॥

"टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम्" ॥

'इह कस्मादिति'। लडादेशस्य स्थानिवद्भावेन टित्त्वमस्तीति प्रश्नः। 'पवमाना यजमानेति'। ननु शानजादिषु लट इत्यस्य निवृत्तत्वाद् अनादेशपक्षः स्थापितः, पवमानेत्यादिषु शानजुदाहर्त्तव्यः। 'द्व्यनुबन्धकत्वाल्लट इति'। लडादिष्वकारादयोप्यनुबन्धा इति भावः। एतेन लिड्लृटौ व्याख्यातौ अनूचाना वक्ष्यमाणेति। 'ल्युडादिषु कथमिति'। द्व्यनुबन्धकत्वात्तेषामपि ग्रहणेन न भाव्यमिति प्रश्नः। 'टित्करणसामर्थ्यादिति'। न च लडादिष्वपि टित्करणसामर्थ्यमित्याह। 'इतरथेति'। 'पठिता विद्येति'। कथमित्यनुषङ्गः। इटष्टित्त्वमुभयार्थं स्यादिति प्रश्नः। 'आगमटित्त्वमनिमित्तमिति'। आगमानां टित्त्वं ङीपो निमित्तं न भवतीत्यर्थः। कुत इत्यत आह। 'ट्युट्युलौ तुट् चेति लिङ्गादिति'। यद्यागमटित्त्वं ङीपो निमित्तं स्यात्ततः सायन्तनीत्यादौ तुट आगमस्य टित्त्वान्ङीप् सिद्ध इति ट्युट्युलोष्टित्करणमनर्थकं स्यादिति भावः। ननु च पुराणप्रोक्तेष्विति निर्द्देशेन यदा तुण् न भवति तदा ङीबर्थं तयोष्टित्त्वं स्यात्तत्र, पुराणशब्दाद्बाह्वादिषु पाठान्ङीषा भवितव्यम्, अन्तोदात्तो हि पुराणीशब्दः पुनःपुनर्जायमाना पुराणीति यथा। एवमपि न ज्ञापकं बाह्वादिभ्यश्चेत्यत्र वेति वर्त्तते, ततश्च ङीषा मुक्ते ङीब् यथा स्यादिति ट्युट्युलोष्टित्त्वं स्यादिति चिन्त्यमेतत्। 'सौपर्णेयीति'। सुपर्णशब्दात्पाककर्णादिङीषन्तात्स्त्रीभ्यो ढक्, ननु च सानुबन्धत्वादस्य ग्रहणेन न भवितव्यमत आह। 'निरनुबन्धक इति'। यद्यपि शिलाया ढ इति निरनुबन्धको ढशब्दोस्ति स इह स्वभावान्नपुंसकलिङ्ग इति स्त्रियां नास्तीत्युक्तं, योपि सभाया यः, ढश्छन्दसीति ढः सोपि स्त्रियां न वर्त्तते कथं, तत्र तत्र साधुरिति वर्त्तते कथं च स्त्री नाम सभायां साध्वी स्यादज्ञसभायां हि विदुषामधिकारः। ननु मा नाम भूदज्ञसभायां

साध्वी शालायां स्त्रीसभे च साध्वी भविष्यति, तत्रयज्ञसभायां साध्वी ब्राह्मणपरिषदित्यत्रापि प्रसङ्गः, एवं तर्ह्येवंविधे विषये छन्दसि सभेयीशब्दस्य प्रयोगाभावोत्र हेतुः । 'णोपि क्वचिदण्कृतं कार्यं भवतीति'। शीलं छत्रादिभ्यो ण इति यो णस्तत्राण् कृतं कार्यं भवतीति । कथं, ज्ञापकात्, यदयं कार्मस्ताच्छील्यइति टिलोपार्थं निपातनं करोति, यदि हि ताच्छीलिके णे ऽण्कृतं कार्यं न स्यान्निपातनमनर्थकं स्यात्, कर्मशब्दाच्छत्रादिलक्षणे णे कृते नस्तद्धितइत्येव टिलोपस्य सिद्धत्वात्,च चाविति प्रकृतिभावः, अणि हि स प्रकृतिभावः, । 'चौरी तापसीति"। चुरातपःशब्दौ छत्रादिषु पठितव्यौ । क्वचिदित्यस्य व्यावर्त्यं दर्शयति। 'दाण्डा मौष्टेति'। दण्डमुष्टिशब्दाभ्यां तदस्यां प्रहरणमिति णः । 'औत्सी औदपानीति'। उत्सोदपानशब्दाभ्यां भवार्थे उत्सादिभ्योञ्, अथ शार्ङ्गरवादिसूत्रे पुनरञ्ग्रहणं किमर्थं, यावता ऽनेनैव सिद्धं, न रूपभेदो न स्वरभेदस्तत्राह । 'शार्ङ्गरवाद्यञ इत्यादि'। बिदस्यापत्यं बैदी, अनृष्यानन्तर्ये बिदादिभ्योञ्, गोत्रं च चरणैः सहेति जातिः, तत्रौत्सीत्यादौ चरितार्थमिमं ङीपं बाधित्वा जातिलक्षणो ङीष् प्राप्नोति, यदि तर्हि तस्य निबन्धनमस्ति तदेवाञ्ग्रहणमस्तु किमत्राञ् ग्रहणेन, न वा जात्यधिकारात्, जातेरिति हि तत्र वर्तते, अनधिकारे हि पुंयोगादाख्यायां ङीन् प्रसङ्गः, बैदस्य स्त्री बैदी । ऊरुद्वयसीत्यादौ प्रमाणे द्वयसज्दघ्नञ्मात्रचः । 'पञ्चतयीति'। संख्याया अवयवे तयप्. द्वयसजादिषु अनुबन्धोच्चारणं प्रातिपदिकानां ग्रहणं मा भूत् किमस्य द्वयसं किमस्य मात्रमिति । तयशब्दोपि तयतेः पचाद्यजन्तः सम्भवति । 'ठगादिनिवृत्त्यर्थमिति'। दण्डोस्या अस्ति, अत इनिठनौ,दण्डिका, काश्यादिभ्यष्ठञ्ञिठौ काशिकेत्यादौ मा भूदित्येवमर्थम् । 'तादृशीति'। त्यदादिषु दृशोनालोचने कञ्च, आ सर्वनाम्नः, कञो अकारोच्चारणमातोनुपसर्गे कः गोदेत्यादौ माभूत् । 'इत्वरीति'। इण्नशजिसर्तिभ्यः क्वरप् । 'आढ्यङ्करणीति'। आढ्यसुभगेत्यादिना ख्युन् । 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामिति'। भाष्ये तु कञ्क्वरप्इत्येतावत्सूत्रं ख्युनः पाठो नार्ष इति

